७, १, १, ६; काश्रा ५७ : ५?[a].

ϕअग्नेः-प्रिय[b]– -यम् आ २, ७, ८[c].

अग्ने(ग्रा-इ)न्द्र[d]– > आग्नेन्द्र[e]– -न्द्रः गो २, १, १७;-न्द्रौ ऐ २, ३७?[f].

आग्नेन्द्री[d]– -न्द्री ऐ २,३७; -न्द्या ऐ २,३७[3]; शां १४,२.

अग्ने(ग्रा-इ)न्ध्*[g]– > आग्नेन्ध[h]– -न्धम्[i] तै ३,४,८,१.

अग्नेर्-अर्क[b]– -र्कः आ २, ३, ७; जैआ २,१३,५; जैमि २,२५५; ३,१९१[2]; १९२ϕ.

अग्नेर्-आग्नेय[b]– -यम् जैआ १, ६६[j]ϕ; -ये आ, जैआ १,४५.

अग्नेर्-आयुस्[b]– -युः आ,जैआ १, ४३.

ϕअग्नेर्-आर्षेय[b]– -यम् आ १, ९; २७; ६६[j]; जैआ १, ९, २७.

अग्नेर्-इला_रा[k]_न्द[b]– -न्दम् आ २,१९,१-५[l].

अग्नेर्-गौङ्गव[b]– -वम् आ १, २४७[m].

अग्नेर्-जराबोधीय[b]– -ये आ १, १५; जैआ १,१५ϕ.

ϕअग्नेर्-द्रविण[b]– -णम् आ, जैआ १ ५५.

ϕअग्नेर्-दाधिक्र[b]– -क्रम् आ, जैआ १,३५८.

अग्नेर्-निधि[b]– -धि जैआ २, ३,७.

ϕअग्नेर्-यज्ञायज्ञीय[b]– -यम् आ, जैआ १,३५.

अग्नेर्-यद्वाहिष्ठीय[b]– -ये आ,जैआ १,८६.

(अग्नेर्)यन्मंहिष्ठीय[b]– -ये आ १, ८६.

अ(ग्नेर्>)ग्ने-रथन्तर[b]– -रम् जैआ २ १६,९.

अ(ग्नेर्>)ग्ने-राक्षोघ्न[b]– -घ्नम् आ १, ८०ϕ; -घ्ने आ, जैआ १, २४-२५; ४६५ϕ.

अग्नेः-रौरव[b]– -वम् आ १,५११.

ϕअग्नेर्-वारवन्तीय[b]– -यम् जैआ १ १७[n].

अग्नेर्-विशोविशीय[b]– -यम् आ १, ८७; जैआ १,८७ϕ.

अग्नेर्-व्रत[b]– -तम् आ २,२३,१; जैआ २,५,३ϕ.

अग्नेर्-हरस्[b]– -रसी आ १,२२; ४४;२,७,१-५; जैआ १,२२; ४४.

ϕअग्नेः-श्रैष्ठ्य[b]– -ष्ठ्यम् जैआ १, ११४.

ϕअग्नेस्-त्रिणिधन[b]– -नम् आ १, ५१४.

ϕअग्नेः-संवर्ग[b]– -र्गः आ,जैआ १, ११.

ϕअग्नेः-संसर्प[b]– -र्पाणि आ २,५, १-१०.

अग्नेः (समन्त-) आ,जैआ १,६१.

अग्नेः-सहस्रसाव्य[b]– -व्यम् तां २५, ९,१.

ϕअग्नेः-सामन्[b] - -मनी आ,जैआ १ ६७;३६४;५१४; –मानि आ १,५४१.

ϕअग्नेः-सामुद्र[b]- -द्रे आ १,१८.

अग्नेः-स्वर[b]– -राणि जैआ २,२३, १०-१२.

अग्न्य(ग्नि-अ)गार[o]– -रम् श १३, ४,१,८.

अग्न्य(ग्नि-अ)भाव– -वे सा १,३, २.

अग्न्य(ग्नि-अ)र्कृ[p]– -र्कौ श १२, ३, ३,१४; गो १,५,१०[2].

अग्न्य(ग्नि-अ)र्चिस्[o]– -र्चिः श १४, ५,३,१०,

अग्न्य(ग्नि-अ)वदग्ध[q]– -ग्धम् का १,२,३,२३[r]; २,१,२,९[s]; ५,५, ४,८[t].

अग्न्या(ग्नि-आ)दि[u]– -दिः सा १, ३,८;४,१.

अग्न्या(ग्नि-आ)धेय[d]– -यम् श २, १,४,१[2];२,२,९; १०,१,५, १; का १,१,४,१; २,२, ६; सा १, ३,३; गो १,५,७; २३; –यस्य का १, २, २, ६; जैमि १,४४; –यात् गो १,५, ७; - याय काअ ७ : ३; –ये शां १८,१४; काअ २०:५; काकृ ८९ : २; –येन शां ६,१५.

---

*a*) °येन इति पाठः? यनि· शोधः। *b*) =साम-विशेष-। *c*) सप्र· जैआ २,१६,१३ योपितां प्रि° इति पाभे·। *d*) वैप१ द्र·। *e*) विप· (भाग-)। साऽस्यदेवतीयः अण् प्र·। *f*) पाठः? अग्ने° इति शोधः (तु· Haug)। *g*) =अग्निमिन्ध-। उस· उप· अण् प्र·। पूप. अदेवताद्वन्द्वेऽपि आनङ् उसं. (पा ६,३,२६)। *h*) स्वार्थे अण् प्र.(तु. भा.)। प्र. स्वरः। *i*) पाभे. वैप१ अग्न्येध्रम् मा ३०,१२ टि.द्र.। *t*) सप्र. परस्परं पाभे.। *k*) तु. सप्र. तां ५,३,२। *l*) सप्र. जैआ २,६,४-८ इलान्दम् इति पाभे.। *m*) सपा. जैआ १,२४७ गौङ्गवम् इति पाभे.। *n*) सपा. आ १,१७ इन्द्रस्य वा° इति पाभे.! *o*) नाप.। षस. अन्तोदात्तः। *p*) द्वस. अन्तोदात्तः। *q*) तृस. पूप. प्रकृतिस्वरः। *r*) पाभे. अग्निदग्धम् श २,२, ३, २८ टि. द्र.। *s*) पाभे· अग्निदग्धम् श १,१,२,९ टि. द्र.। *t*) पाभे. अग्निदग्धम् श ४,५,१,१५ टि. द्र.। *u*) विप.। बस.।

आग्न्याधेयिक,का[a]- -कम् , -काम् गो १,२,२१.

अग्न्याधेय-रूप[b]- -पम् श ११, १,१,७.

अग्न्याधेय-शर्करा[b]- -राः श १३,८,४,११.

अग्न्याधेय-हविस्[b]- -वीꣳषि श १०,१,५,१.

अग्न्या(ग्नि-आ)यतन- -नानि गो १,३,१३[२].

अग्न्या(ग्नि-आ)हुति- -तिः ऐ २, १४.

अग्न्यु(ग्नि-उ)क्थ- -क्थम् शां १९, ४.

१अग्न्यु(ग्नि-उ)पस्थान[c]- -नम् का १,४,१,२७[d].

२अग्न्यु(ग्नि-उ)पस्थान[b]- -नम् श २,३.४,३८[d];४,१,२; का १,४,२,१.

अग्र[e]- -ग्रः ऐआ ३,१,३; जैमि३,२२८; -ग्रम् ऐ ३,१३; ऐआ १,३,३[२]; ६[२]; ४, १[२]; शां १६,७; श २, ४, २, १७ ; ३, ८, २, १३; ५, १,२,१८; ६, १, १,११;३, ३,६; ७,३,२,३;४, १, ६; ५, २.३६; ९,२,१,१२; १०,१,१, १;४; ११,७,३.२; १३, २, ९, ७[३]; ५, २, ५; १४, ७, २, ३; का १,३,३,१४; ६, १, ११; २, ८.१.१२[२]; ३, १३; ३,२,७,३; ४[f]; ४,८, २,९; १३[g]; तै १, २, १,२३;३,२,२; ३; २,४, ७, ६; ५,१,१;८,१०; ३,१,५, ८[३]; ३, २,१; ९, ७, ४[२]; तैआ २,२,१; जैमि २,९; ९७[१२]; १९०; १९७; २१७; २२७[१८]; २४२; ३३७[२]; ३७६; ३८९; ३, २०[२] ; ७८[२]; १३५[२] ; १८४[३]; तां २, १, ३;३,३[२]; ३, ४, २; ५, २; ६, २ ; १३ , २; ६, ९ , ११ ; १२; १२,११,४[२]; १४,१, १२; १७,२,४[२]; ४, २; १९, १२,८; २१, ११, ३; २३, १९, ९; सा ३, ३, २; -ग्रम्ऽ-ग्रम् जैमि ३, १३५; -ग्रात् तै ३, ३,१,४; जैमि ३,१८४[२]; तां २,१, ३; १७,४, २; २१,११, ३; २३, १९, ९; -ग्राणि श १, ३, ३, ४[h]; -ग्राभ्याम् श ७, १, १ , २९[२]; ३१[२]; -ग्राय तै ३,१,५,८; तां ७,२,१; -ग्रे ऐ १,७;१६; १९; २५; २, ३३ ; ३९[२]; ३, २३; ४,२५[२]; ५, २३; ३४; ६, ३१[३]; ८, ६; ऐआ २, ४, १; ५, १[३]; ३,१,१; शां ८,९; १४,५; १५, ४; १६, २; २३, २ ; २७, ७; शांआ ३,५; ७,२; ११; श १, १,३,७[२];२,२,४; ३, १[२]; ६;५, २४;३,१,२०[i];४,२; ५[२]; २,१, २,४;४,२५;२६;२,४,१;२[२]; ३, १,१;२२;४,४;१६;४, १, ३; ७; १३; ४,१;२;५,१,१; ३; २, १; ६,१,१४;३,१,२,४[५];५[२];६;१३; २०[२];३,९;१४[२];४,६;१२;२,१, ९[j];१५;१९[२];४,१,१९[२]; २,१५; ३,१२;५,१,१३;२,४;४, ६; ७; ७,२,५;६;३, ३; ४,२;८,१,५; २,७;१७;२४[२k];२५; ३, ८; ११; १५;१६[३l];२८; ४, १८; ९, ४, १२;२०;२२; ४,२,२, ६[२]; ८[२]; ४,१[m];५,९; ३,२,७; ५, १, ३; ४,१;३-५;९;६,७, १३[२]; ५, १, ४,५;७[२];८;९;१३, ५, २७[२];५, ५,९;६,१,१,१[२]; ३,१;५,१, ३; ५;६;४,४;५;६,१, १७; ७, ३, १०[२];८ १, ८[२]; २, १; ७,१, १, २१;२७;३०;३३; २, २३[२]; २, १,१७;२,६:१२; ३, ५; ४, १, २[२]; १९[२]; ५, २,६;३६[३];८, २, ४, १८; ४, १, ४; ६, १,२३; ३,१७;७,१,९;२,१३[२];३,५[२];४, १०;९,१,२,२१;२५;२८;२९[२]; २,१,१३;४,४, ९; ५, १, ११; १०,१,४,१;२,२,३;३, १८; ४, ८;५,३,१[२];६,५, १; ११,१, २, १२[n]; २,१,१;३,१;६[o];४,१,६; १३;१४[३];५,८,१;८,३,१; १२, ४,१,५;६,१,४१;७,३, ६; १३, ५,२,५;२३;१४,१,२, ११[२]; २, २,४४; ४,२,१[३]; ३,४[२]; का १, १,२.२;२,३,९[२];४, २[२]; ३, १, १;१४[२];४,१,३;१३; २, २; ३; ५;७;३.३;४; ५;५,१,१; ६, १,

a) विप. । तत्र भवीयष् ठञ् >इकः प्र. (पा ४,३,६८ ) । स्त्री. ङीब्- अभावः उसं. (पा ४,१,१५) । b) षस. अन्तोदात्तः । c) कास. कृत्स्वरः प्रकृत्या । d) सपा. परस्परं पाभे. । e) वैप१ द्र. । f) वृक्षस्य वाग्रं प्रशीर्णम्>सपा. श ११, १, ८, ६ अग्रप्रशीर्णो वृक्षः इति पाभे. । g) अग्रं तृणस्य> सपा. श ३,८,२,१८ तृणम् इति पाभे. । h) सपा. का २,३,२,५ उत्तरार्धैः इति पाभे. । i) सपा. का २,२.४, १६ अग्रेण इति पाभे. । j) सपा. का ४,२,१,५ प्रथमेन इति पाभे. । k) सकृत् सपा. का ४,८,२,१८ पूर्वम् इति पाभे. । l) आत्मन एवाग्रे> सकृत् सपा. का ४,८,३,१० प्रत्यक्षम् इति पाभे. । m) सप्र. का ५,२,४,१ पुरा इति पाभे. । n) सपा. का ३,२,१,८ पुरा इति पाभे. । o) सपा. का ३,२,५,३ पुरा इति पाभे. ।

९; ११;२,७[२];३,५; २,१,१५[२]; २०;३,२१;४,६;२,२, ४, १६; ३, २, १; १२;१९;२२;४,१८; ४,१,३;४[२];३,३[३];४;५; ७[२]; ९; ७, ३, २; १७;४, ५;८,३,२०; ४,१;७[४]; **३**, १, २, १[२];४, ३; ५२,१;२,५,१; **४**,१,२,३[४]; ४[२]; ८;११[२]; ३,८[२];१२[२];२,१, ५[२]; ११;१५[२]; २१[२]; २७;४,४;३,३, ४;४,९[२];४,३, १०[२]; ५, १,१७; २, ११[२]; ४,५; ६,३,१०; ७,१, ७; २,५[२]; ३,१;२;४,१;८,१,३; २, १२; १७; १८; ३, ७;१०[३]; १६;४,१२;९.४, ९; १६; १८; **५**,१,४,१;२,१, २०; २,४[३];५[३]; १०; ३, १५[२]; ३,१,७; २,२२; ३,५;४,१,५;१९[२];२, ६; ६, २, १; ३; ८,३.४;४,१२[२];**६**,१,२, १५;४,५;७[२];८[४];९;१२; २, १, १५[२];२,१५;३,३; ६; **७**, ३, ३, ६[४];५, ३, ५; ७; काअ **२१**: ३; तै १,१,३,५;४,४;५; ७; ५, ७; ३,५, ३; ४, १,३[२];५,६,१-३; ६,२,६;९,५;८,७,१; **२**, २, ९, १;४,१,१०;३,३;५, ७; ७, ३; १०;८,१;६,४, ३; ७, १३, २; १५, ६; १८, ३; ८, १, ४;९, ४[२]; **३**, २, २, ७; ५ ३[४];७,३[३]; ९,६;३,१,१;५;६, १[४]; १०; ६, ३, २; ७, ९,७; १२,१,१;३,१; तैआ **१**,१२, १; २३,१; **३**,११, ९[a];११;१२; १३, १; २; **४**,२, ३; **५**,२,८[२];९, १; **६**, १०, २; ८,७,१; **१०**, ६३, १; जैमि **१**, १७;६८; ७३; ७८[२]; ८२; ८७[२]; १०१ ; १२८[२]; १४६ ;१५६[२]; १६६;२०५;२०९;२१०; २३७; २८७ ; २९० ; ३१४ ; ३४४ ; ३५४; **२**, ५; १४; १६[२]; १८; ४५; ४६[२]; ७९; १३९; २०७; २४४[b] ; ३६९ ; ३७४; ४११; ४३८;**३**,१;३९;४१; ६२[२]; ७८; ११०; ११४[२] ; ११७ ; १३५[३]; २४९; तां **६**,५, १९; **७**, १, ७; २,२[३];३,१२; **८**,८,५;**९**,४,१६; ९,१२;**११**,११, ६; **१२**,११.३; **२२**,९,४; ष **१**, १, १; सा **१**, १,१; **२**,८,५; गो **२**,२, १; ६; ३, ९[३]; १८; २०; २३; ६,९[३]; -ग्रेण[c] ऐआ **५**, १, २; शां **२७**, ६; श **३**,१,३, ७[d]; २८; ३, २, ५;४,२१;५,१,२६;६,१. ६; ८, २,२०;५,१०;९,३, १७; **४**, ३, ४,१४;४,५,९;५,७, ४; ६, ९, २३; **५**, ३, ५, ३;१०;४,३,६; १३[२]; २७; ४, २; **७**, ३,२,२; **१३**,५,२,१६;८,२, ६; **१४**, १, ३,१;८;३,१,१;१३; का **१**, १, २, २[e]; **२**, २,४, १६[f]; ४, २, ७[g]; ७,२, ९[२h] ;३,९[i];२०[२j];८, ३,२[k];४[l]; **३**,१,११, १[m]; १२, २२[n]; **४**,५,१, १६; ६,२.१०[o]; ७,१, १२; ८,२,१५;३,६;९,२, ८;१०;३,१४; **५**, २,१,१७;५, ३,४; ६, ५, ४[p]; ७,४.६;८,३, २०; **६**,२,२,१६;१८; **७**,२, २, २३;४,३;३,३,५; ७;१२[२];४,१; तै **२**,६.१०,६; **३**, ६, १३, १; जैमि **२**. ३९८; ४०६; गो **२**, १,४;३, १७; –ग्रेषु श **६**.५,२, १६; का ८,५, २, ५; –ग्रैः श **७** ३,२,३; ९,२,२,१२; का **२**, २, ४,५[२]; ९.२,२, ३; **११**, ४, १ , ७ ; तै **३** , ३ , १, ४.

[°ग्र,ग्रा– अङ्गुलि°, अति°, अभि°, अर्वाचीन°, अवाचीन°, अशुष्क°, आग्रयण°, उदच्°, उदीचीन°, एतद्°, ऐन्द्रवायव°, ग्राम°, जिह्वा°, ज्योतिस्°, तीक्ष्ण°, १,२दक्षिणा°, दीप्त°, नख°, प्रतिशीर्ण ,प्रतोद°,प्राच्°, प्राचीन°, मुसल°, मैत्रावरुण°, यूप°, वात°, वाल°, वृक्ष°, वृषभ-शृङ्ग°, शुक्र°, शुष्क°, १स°, हृदय°, हृदयशूल°]

**अग्र-काम–** **-माः** जैमि **२**, २२७; **–माणाम्** जैमि **२**,२२७.

**अग्र-णी**[q]**–** **-णीः** शां **१७**,७; गो **२**, ५,४.

**अग्र-तस्(:)** तैआ **३**,१२,३[r]; जैमि

*a*) पाभे. वैप१ अग्रे तै **५**,७,४,३ टि. द्र. । *b*) सपा. तां **२०**,१४,२ एकः इति पाभे. । *c*) क्वचिद् वा. क्रिवि. । *d*) सपा. का **४**, १, ३, ६ **पूर्वार्धे** इति पाभे. । *e*) सपा. श **२**,१,२,४ **उत्तरार्धे** इति पाभे. । *f*) पाभे. अग्रे श **१**,३,१,२० टि. द्र. । *g*) सपा. श **१**,४,५,१ **पूर्वेण** इति पाभे. । *h*) सपा. श **१**,७,४,१२[२] **पूर्वेण** इति पाभे. । *i*) सपा. श **१**,८,१,१३ **पुरस्तात्** इति पाभे. । *j*) सकृत् सपा. श **१**,८,१,३९ **पुरस्तात्** इति पाभे. । *k*) सपा. श **१**,९,२,२ **पूर्वेण** इति पाभे. । *l*) सपा. श **१**. ९,२,४ **पूर्वेण** इति पाभे. । *m*) सपा. श **२**,३,३,१३ **पूर्वेण** इति पाभे. । *n*) सपा. श **११**.१,६,२३ **प्राङ् सृत्वा** इति पाभे. । *o*) सपा. श **३**,६,२,२० **उत्तरेण** इति पाभे. । *p*) सपा. श **४**,५,८,५ **दक्षिणेन** इति पाभे. । *q*) वैप१ **अग्रेणी-** टि. द्र. । *r*) पाभे. वैप१ **अग्रतस्(:)** ऋ **१०**, ९०, ७ टि. द्र. ।

२,३७६; ३,३०७; सा १,५, १५[२].

अग्र-दिधिषु[a]– -षुः[b], -षौ[b] तै ३, २,८,१२.

अग्र-देव[c]– -वः जैमि २,३४२.

अग्र-पिण्डु[d]– -ण्डम् तैआ १, ३१, ६[e].

अग्र-पेय– -ये ऐ २,२५.

अग्र-प्रशीर्ण[f]– -र्णः श ११,१,८, ६[g].

अग्र-भुज्[h]– -भुक् तैआ १०, ११, २.

अग्रेऽय(न>)ण–>आग्रयण[a]– -णः ऐ ३, १; श ४,२,२,१;५; ६;९[४i];४,१,५; ५,४,६;९,२;८; का ५,२,२,१;४[२];६[३]; ४,३,५[२]; ६,२,५;६,२;७; जैमि १,३५३[२]; -णम् शां १६,३; श २,४,३, १४;४,३,३,२; ५,२१;२२[२]; ५, ३,८[२];४,६;७;६,३; ८,१,२, ८; का १,३, २, ५; १२; ५,३,४, २[j];४,२, १२[२]; १३; ६,१,७;२, ५[३];३,२;७, ५[l]; ८[k]; तै १,५,४, २;६,१,९; गो १,५,७;९; २,१, १७[२]; -णस्य शां ४,१२; श ४, ३,५,२१[l]; ५,१०,७; जैमि १, ३५२; -णात् श ४,४,१,५; ५,१,२,१;८,१,२,८[२m]; का ५, ४,२,१२[l];१३; ३,५;६,१,२,१; १०,१,१, १७[२m]; गो १,५,७; -णेन ऐ ७,९; शां ४,१२;६, १५; का १,३,२,१; गो १,५,८. [°ण- सु°].

आग्रयण-देवता– -ताभ्यः शां ४,१४.

आग्रयण-पात्र[n]– -त्रम् श ४, ५,५,८[j];१२[k].

आग्रयण-स्थाली[n]– -ली तै १,४,१,५; -ल्या तै १,४,१,५.

आग्रयणा(ण-अ)ग्र[o]– -ग्रान् श ४,५,९,२[२];८[२];१३; का ५, ६,६,२[२];७[२];९.

आग्रयणीय[p]– -यान् शां ४, १४.

आग्रयणे(ण-इ)ष्टि[q]– -ष्टिः श ५,२,३,९; १२,३,५,७; का ७,१,१,८; -ष्ट्या श २,४,३, १; ५,२,३,९[२]; का ७,१,१,८.

अग्र-यु[r]– -युः जैमि १,८१[s].

अग्र-हाय(न>)ण[t]– >आग्रहा-यण– -णे जैमि ३,१०६.

अग्रा(ग्र-अयन>)यण[a] – > आग्रायण[a]– -णम् जैमि १,८१.

१अग्रिय[a]– -यः तै १,८,८,२; -यम् तै २,५,१,१;३,५,१२,१.

२अग्रि(य>)या[u]– -या[v] श ११,५, १,७.

३अग्रिय,या– -यः ऐ १, २१; ३, १३; २७; शां ८,६; जैमि १, ९१[२]; २,९; ९६; १०३; ३७९; ३८९[२];३,११; २०[३]; ५४;१३५; तां ४,२,१७;६,९,१०;११; ११, ६,१;२;१६,११,२; १८,८,१०; -या ऐ ३,१३; -याः जैमि ३, २२८[२]; तां २,३,४.

अग्रे-गा– -गाः शां १४,४; तै २, ४,७,६.

अग्रे-(गु>)गू[a]– -गुवः श १,१,३, ७;-०गुवः श १,१,३,७[२]; का २, १,३,५[२]; तै ३,२,५,३; ३,६,१.

अग्रे-णी[a]– -णीः श ३,७,१,९[२]; का ४,७,१,७[२].

अग्रे-पू[a]– -पुवः श १,१, ३, ७; -०पुवः[w] श १,१,३,७[२]; का २, १,३,५[२]; तै ३,२,५,३;३,६,१.

अग्र्य,ग्र्या[x]– -ग्र्यः जैमि १,२२०[३]; २,२१७; ३,२७[२]; २२८; ३००; -ग्र्यम् श २,४,३,१३; का १, ३,२,११;४,३, १७; ७,१,१,८; काय ७२ : ३; कापा ९६:९[y]; जैमि २,१९७; -ग्र्या जैमि २,

---

a) वैप१ द्र. । b) पाभे. वैप१ अग्रेदधुः, °धुषि टि. द्र. । c) व्यप. (ऋषि-विशेष-) । d) कस. अन्तोदात्तः (वैतु AVL अग्रपिण्ड- इति उपेक्ष्यम्) । e) °पि° इति पाठः? यनि. शोधः । f) विप. (वृक्ष-) । सस. अन्तोदात्तः । g) पाभे. अग्रम् का ३,२,७,४ टि. द्र. । h) विप. (अग्नि-) । उस. उप. क्विबन्तम् । अ° इति स्वरः? यनि. शोधः । i) सकृत् सप्र. का ५,२,२,६[३] स्वाग्रयणः इति पाभे. । j) सपा. आग्रयणम् <> आग्रयणपात्रम् इति पाभे. । k) सपा. आग्रयणम् <> आग्रयणपात्रम् इति पाभे. । l) सपा. परस्परं पाभे. । m) पाभे. वैप१ आग्रयणात् मा १३,५८ टि. द्र. । n) षस. अन्तोदात्तः । o) बस पूप. प्रकृतिस्वरः (वैतु. BW. °ग्र- इति स्वरः?) । p) =नवान्न- । q) =नवसस्येष्टि- । षस. अन्तोदात्तः । r) विप. । उस. उप √या+कुः प्र. उसं. (पाउ १,३७) । s) पाभे. वैप१ अग्रियः ऋ ९,८३,३ टि. द्र. । t) नाप. (मार्गशीर्ष-मास-) । बस । u) तत्रभवीयः घ>इयः प्र. (पा ४,४,११७) तत्स्वरश्च । v) पाभे. वैप१ अग्रिया ऋ १०,९५,२ टि. द्र. । w) पाभे. वैप१ अग्रेणीयः टि. द्र. । x) विप. । तत्रभवीयः यः प्र. उसं. (पा ४,४,११६) तत्स्वरश्च । y) तपसस्तपसोऽग्र्यं तु>सप्र. खिसा १८,६ तपन्तस्तपसो(सा-उ)ग्रेण इति पाभे. ।

२१७[२]; –ग्र्याः जैमि २,२१७; ३८९;३,२७[२].

?अग्राश्त् जैमि २,३५१.

?अ-ग्राहु[a]- -हुः का ४,५. ३, २३; ६, १,२५.

अग्रि[b]- -ग्रिः श २,२,४,२;६,१,१, ११; का १,२,४,२[२c].

अग्रि-त्व- -त्वम् का १,२,४,२[d].

अ-ग्री(वा>) व[e]- -वः तैआ १, ११, ५; ६.

अ(ग्रु>)ग्रू[f]- -ग्रुवः तै १,२,१, १९; जैमि २,९[३];३९६.

अग्र्य- अग्र- द्र.

√अघ् >अघ[f]- -घम् श १३,८,१, २[३];४[२]; ८[२];१०;११;१५;१८; ३,१०;११; १३; ४,१; २; ४[२]; तैआ ६,१०,१[२];११,१[६];२[६]; मं १,१,१०[g];१४;५,१०;११;१३; गो १,२,७; २,३,१४; -घस्य श १३,८,४,१;२; तैआ ४,३८, १; -घा तै २,६,१०,२;३,६, १३,१; तैआ १,१३,१[२]; २;६, ९,२[३]; १०,२[२]; –घानि तैआ ६,१,२. [°घ, घा– अन्°, अप°, आरे°,केवल°].

अघ-ध्वंसि(न्>)नी[h]- -नी कागा १२४: २.

अघ-मर्षण[i]- -णः तैआ १०, १, १३;१४[२];१५.

अघ-रु[f], रुा- -रुस्य शां २,२; –रुाः जैमि २,२६६[२]; -रुायै श १२,७,३,२०.

अघ-शंस,सा[f]- -सः श १,५,४, ७;२,३,४,३७; का १,४,१,२६: २,६,३४; तै २,८,८,१२; ३, २,१,५; -सम् तै ३,१,१,४; –सा तै ३,१,२,७. [°स- हृत°].

√अघाय् >अघायत्[f]- -यतः श २,३,४, ३१; का १,४,१, २२; तैआ ६,२,१.

अघायु[f]- -यवः श ३, २, ४, १४; का ४,३,४,११; तैआ ६, ९,१; –युः तै २,४,२,१[२]; -यूनाम् तां १,३,२; -योः गो २,४,१६.

अघ्रा[j]- -घ्राम् तैआ १,१,३;२१,२.

अघत् √घस् द्र.

अ-घात[k]- -ताय तै १,३,४,५; ६,२, ३; ३,८,९,४.

?अघालुक,का[l]- -काः, - कानि तैआ १,२६,७.

अ-घात्य- -त्यः जैमि २,१९६.

अ-घुष्ट- -ष्टः शांआ ८,७.

अघृणि[m]- -णिः[n] तै २,४,१, ६; तैआ ६,१.१.

अ-घोर[k]- -रम् गो १,२, १८; २०; –रेभ्यः तैआ १०,४५,१.

अ-घोर-चक्षुस्- -क्षुः मं १,२,१७.

अ-घोष- -ष[न्]° जैमि १, २५३[२].

?अ-घ्निय,या[f]- -याः तैआ ६,६, १; –०याः तै ३, २, १, ४; ७, १०,१; तैआ ६,६,२; –यानाम् तै ३,१,१, ३; -याम् तै ३,७, ४, १३; –यासु[p] तै १, ४,३, ३; ३,७,४,२.

२अ-घ्नि(य>)या- -याः तै २,६,३, २.

अ-घ्न्य,घ्न्या[f]- -घ्न्याः ऐआ १, ३, ५[२]; श ३,८,५,१०; ७,२,२, २१; १२,९,२,४; का ४,८,४, १८; –०घ्न्याः श १,७,१,६[२]; ७,२,२,२१; का २,६,३,४; –घ्न्यानाम् ऐआ १,३,५; ५,१, ६; –घ्न्यायाम्[p] ऐ ५,२७;७,३;, –०घ्न्ये श ४,५,८,१०; का ५, ६,५,६; जैमि २,२५१; तां २०, १५,१५.

√अङ्क् उद्°, सम्°

---

*a*) नां(नु-अ)ग्राहु- इति पाठः? (तु. सप्र. श ३,५,३,२५;६,१,२५ ग्राहो नु इति पाभे.)। *b*) =अग्नि- । *c*) पाभे. अग्निः श २,२,४,२[२] टि. द्र. । *d*) पाभे. अग्निता श २,२,४,२ टि. द्र. । *e*) विप. । बस. अन्तोदात्तः। *f*) वैप१ द्र. । *g*) पाभे. वैप१ अघम् खि २,११,१ टि. द्र. । *h*) विप. (गायत्री-) । उस. । *i*) विप. । उस. उप. √मृष्+युच् प्र. (पा ३, २, १५१) प्रकृतिस्वरश्च । *j*) नाप. (आर्ति-)। √अघ् [⌊=√अंह्⌋+रन् प्र. (तु. AVL भावि २, १०५ च; वैतु. भा. सा. अ-घ्रा- ⌊<नञ्-समासे उप. भाप.<√घ्रा⌋ इति ?)] । *k*) तस. नञ्-स्वरः । *l*) पाठः स्वरतः? अ° इति शोधः । *m*) विप. ( देदीप्यमान-, उग्रदीप्ति- ⌊पूषन्-⌋) । √*अघ् 'दीप्तौ' >*अघ्-⌊भाप.⌋+घृणि->बस. *अघ्घृणि->वावि. यनि. [तु. ⌊अंशतः⌋ भा. <आ-घृणि- इति; वैतु. पक्षान्तरे अ-घृणि- (=अ-दीप्त-, अ-क्रोध- ⌊तु. सा. AVL प्रमृ.⌋) इति च, <√अघृ 'धारणे' इति च ] । एतदनु यनि. =आघृणि- ( तु. ऋ. प्रमृ.) < (√*आघ् 'दीप्तौ' >*आघ्- ⌊भाप.⌋+घृणि->) *आघ्घृणि- द्र. यद्विषये च वैप१ इत्यत्र पपा. अनुसृत्य आ-घृ° इति कृतपूर्वो निर्देशः शोध्यः । *n*) सपा. ऋ १०, १७,५ आघृणिः इति पाभे. । *o*) वा. क्रिवि. द्र. । *p*) सपा. आघ्नियासु (आपश्रौ ९,५,६ च)<>अघ्न्यायाम् (आश्रौ ३,११,७ च)<>माश्रौ ३,२,२ अघ्न्यासु इति पाभे. ।

अङ्क्[a]- -ङ्क्म् ऐआ ७, १७[b]; ऐआ ५,३,३; जैमि ३,१५७; -ङ्कान् जैमि ३,१५७; -ङ्के श १४, ९, ४, २३; -ङ्कौ[c] तै १, ३, ५, ४; २, ७, ८,१; १६,१. [°ङ्क- अङ्क°, उद्° वर्ण°°, सम्°].

अङ्का(ङ्क-अ)ङ्क- -ङ्कम्[d] श ८,५, २,६[२].

अ(ङ्क>)ङ्का-न्यङ्कु[a]- -ङ्कू तां १, ७,५[c].

अङ्कस्[a]- -ङ्कासि श ५, १,५, १९; का ६, २,१, १०.

अङ्कस[a]- -सम् श ५, १, ५, २०; का ६, २, १,१०.

अङ्कु[a]- >अङ्कु-प- -पम् श ८, ५, २,४[२].

अङ्कुर- शत°.

अङ्कुश[a]- -शः ऐ ५,११; गो २,६, ११. [°श- वसिष्ठस्य°].

अङ्कति[e]-> ϕ°तेः-सामन्[f]- -म आ, जैआ १,४८८.

अङ्क(ल>)ली[g]- -ली तां ७,९, ११.

√अङ्ख् परि°.

अङ्खयत्[h]- -यन्[i] श १,७,२, १७.

√अङ्ग् (बधा.), पलि(<रि)°, विपलि(<रि)°.

अङ्ग[a] ऐ ५,१८; शां २५,२; २६,११; शांआ १,२; श ३,९,४, २४;५, ५,४,२४; ६,४,४, ३[२]; १०,२, २,४;१२,७,३,१३; का ४,९, ४,२०; तै १,८,५, ५; २,४,८, ३; ५,५, ७[२]; ६,१,३; ८,९,६; जैमि १,६१;१६२;३,७७;२६६; तां ८,१,३;५;१२,११,२.

१अङ्ग[a]- -ङ्गम् ऐ ६,३१; ऐआ २,५, १; शांआ ५,५[१०]; श ८,१,४, १[३]; ७, २, १४[३]; १५; ३, ६[३]; ११,१,६,३५; २,६,१३[२]; का २,१४,१; ३, १, १२,२९; २, १०,११[२];३ ५; जैमि २,४०३; तां ५,४,१४; गो २,३,१३[३]; १४[३];१५[३];६,६; -ङ्गा गो २,१, २; -ङ्गात् श १४, ४, १, २१; तां १७,५,४; -ङ्गात्ऽ-ङ्गात् शां २२,६; २३,४[२]; शांआ ४, ११; श ४,५,२,६; १२,७,१,१;१४, ९,४,८; तै ३, ६, ११, २; ८; १७, ४; मं १, ५, १६; १७; -ङ्गानाम् ऐ ६.८; ऐआ १,४, १;२.३,५; शां १८,१३; श ४, ५,२,६; ६,६,१, १०[२]; ८,१,४, ४[२];५,४,१; १४,४,१,९; २१[l]; का ५,६,४,६; गो २,५,१४; -ङ्गानि ऐ २,६;१८; ३,२;३१; ६,८[२]; ऐआ १,२, २; शां १०, ४;१७,७[२]; २९,८[२]; शांआ ४, ३;४; श १,३, २,२; ३; ३,३, ४,१४[२]; ७,४,८; ९;४, २,२,५; ५,२, १०; ९,११; ५,३,५,२५; ६,१,२, १५[२]; ३१[४]; २,१,२३; ३४;२,९;७,२,६[२]; ८,१, ३,१[२]; ४,२; ७; ४,३,१५; १६; ७,२, १५; ३,२१; ९,२,२,६[२]; ५,२, १६[३];१०,२,३,;५; ६,१४;५,१, २;६,४,१; ११,५,२,७; १२,१, ४, ३; २, ३, ६[२]; ४, १६; ३, १, ९; ८, १, १७[२]; २२[२]; ९, १, ४; ११; १४, ६, ७, ६; का २, ३, १, २ ; ३ ; ४, ३, ४,११[२]; ७,४,६[२]; ५ २,२,३;६, ४,३;६,९[२]; ७,२,४,१९; तै १, १,६,४[२]; २,६,४; २.३,६,२;७, २; ६,४,६[j]. ५,४; ५; ३.७,४, ११;१३,१[k];३; ८,१४,५[२]; तैआ १,११, ६; ७,५,१; तैआआ ७२; जैमि १,१९; २३५; ३११; २, १८[२];१९;१५९; ३९६; ४०७[l]; ४०८[२]; ४१५; ४१७[४]; ३,२३९; ३३९[२];३४४; तां ५,१,६; ६,५, ष १,३,१५; २.६,३.८,६[२]; ४, ७,१;२[२]; सा २,५,४; ३,१,७; ६,११;१३; गो १,१,४;३,१६; ४,१८;१९[५]; ५,३;४; ८; २,३, १४[२];५,४[३];१४[३];६,६; -ङ्गे श ८,१,४,१०; -ङ्गेऽ-ङ्गे श ३,८, ३,२७[२]; ६,१,२, ३१; ८,३,४, ४;५; १०,२,६,१५; का ४,८, ३,२५[२]; तै ३,८,१७,४; जैमि १,१६२[५]; -ङ्गेन जैमि २,१७; ४०३;-ङ्गेनऽ-ङ्गेन जैमि २,४१४; -ङ्गेभ्यः ऐ ४,२२; २३; ऐआ २,५,१; श ३,८, ३,२०;४,३; ४;४,५,२,६;९,२,२,६; १२,८, ३,२२; १४,७,१,४१; का ४,८, ३,१२; ४,२[२]; तै १,५,४,३; जैमि १,२५४; २, २०[२]; ३९०; गो १,१,७; -ङ्गेषु ऐ ४,२३; श १२,८,३,२२[२]; मं २,२,५;

a) वैप१ द्र.। b) सप्र. शांश्रौ १५,२४,१ उपस्थम् इति पाभे.। c) पाभे. वैप१ न्यङ्क्रौ टि. द्र.। d) पाभे. वैप१ अङ्काङ्क्रुम् टि. द्र.। e) =आचार्य-विशेष-। <√अङ्क् इति पाउ ४, ६१। f) =साम-विशेष-। g) =मार्जारी- इति सा., हिंस्रजन्तु-विशेष- इति C.। h) °ङ्क्षयत्- इति BW. MW.? i) सपा. का २,६,४, १५ इङ्खयन् इति पाभे.। j) पाभे. वैप १ मा १९,९३ टि. द्र.। k) सपा. वैताश्रौ २४,१ अङ्गा इति पाभे.। l) अङ्गानि, यन्ति>सप्र. छुजै ९४ : ३ आगमयन्ति इति पाभे.।

जैमि १,२५४; -ङ्गः ऐ ३,३[४]; शां २,७[२]; श ३,७,४,९[२]; ५, ३,५,२५[२]; ११,५, २,८; ७,२, ६[a]; १२, २, ४, ८; का ४,७, ४,६[२]; ७,२,४,१९[२]; १३,७,२, ४[a]; तै २,६,४,६; तैआ १,१, १[२]; २१,३; ३,४,१[a]; काअ २१: ७; जैमि २, ४१५; ष २,८,६; गो १, ५, ४. [°ङ्ग- अतिरिक्त°, अनु°, अलोप°, अश्लोण°, अहुत°, उत्तम°, चतुर्°, त्रि°, देव°, परि°, प्र°, १प्रिय°, यथा°, विकृत°, वीडु°, षष्°, १स°, संभृत°, सर्व°, सु°, हीन°, हुत°].

अङ्ग-कषाय[b]- -यः श १४, ९,४,८.

अङ्ग-रस- -सः, -सम् गो १,१,७.

अङ्ग-शस्(:) श ३,८, ३,१०; ३७; का ४,८,३,६; २५; गो २,६,७.

अङ्ग-समाख्यायम्[c] ऐ १,२१.

अङ्ग्र्-एजय- अन्°

अङ्ग-होम[d] -मान् तै ३,८,१७,४.

अङ्ग्य पलि(>रि)°

अङ्गयमान- पलि(>रि)°

२अङ्ग[e]-> ? अङ्ग-जित्->

?अङ्गजिद्-ब्राह्मण[f]- -णेषु श ११,४,३,२०;

३अङ्ग[g]- -ङ्गः, -ङ्गम्, -ङ्गस्य ऐ ८, २२.

४अङ्ग[h,i]->अङ्ग-मगध -धेषु गो १,२,१०;

५अङ्ग- √अञ्ज् द्र.

अङ्गार[j]- -रः श ३,९,३, २६; का ४,९,३,१९; तै ३,७,२,५; जैमि १,१[२]; -रम् श १,२,१,५; ८; ९; १२,४,३,३; का २,१, ४,३; ६; ७; १४ ७,३,३; तै ३,२,७,१; सा २ ६, १४; ३,६,१२; -राः ऐ ३,३४[२]; शां २८, ५[j]; शांआ १० ८; श २,३,२,१३; ४,५, १,८; ५,३,१,१०; ४,४,२३; ११,३,२,१; १२,४,२,३; ४; १४,९,१,१२-१६; १७[२]; का ३, १,१,१: ५,५,४,४; ७,१,४,११; ३,४,२२; तै १,१,५ ९; २ १, १०,३[२]; जैमि १,१२; १३; १५[४]; ४६[२]; ५६; २३८; ३,१६५;. ष ५, १०, २; गो १, २, १८; -राणाम् सा ३,४,१०; -रान् शां २,१[३]; २; शांआ १०,८; श १,२,१,४; ३,८,१,८; ६, ४,४,९; १२,८,१,६; का २, १,४,३; ११; तै २,१,३,१; जैमि १,७: ३९[२]; तां ९,९,८; गो १,३,१३[३]; -रेण तै ३,२, ८,१०; -रेभ्यः श ४,५,१,८[k]; तै २,१,१०,३; जैमि ३ २६३; -रेषु शां २,२; श ४,५,२,१७; १२,५,१,७[२]; तैआ १,२७,६; जैमि १,५५[२]; -रैः श १,२,१, १३; ४,५,२,१८; गो २,२,१६.

अङ्गार-क[l]- -काय काग्रह ४४ : १.

अङ्गार-मिश्र[m]- -श्रात् जैमि ३, २६४.

अङ्गारा(र-अ)वक्षयण[n]- -णम्° श १४,६,९,१९.

अङ्गिरस्[p]- -०र : ऐ ६,३५; ७,१७; श १,४,१,२५[२]; ३,५,१,३२; ६,४,४,४; ७,३, ६[q]; का २,३, ४, २०[२]; ४, ५, १,१८-२०; ८, ७, २, २०[q]; तै १, २, १,१०; ३,५,२,१; ११,६, ३; जैमि २,११७; ३ ६२; गो १,५,२४; २,६,१४; -रसः[r] ऐ १,१६; ३,३४; ४,१७[२]; ३२; ५,१४; २०; ६, ३४[२]; ३५ ८, १२; १४; १७; १९: शां २६, ११; ३०, ६[३]; श १,४,१,२५; ३,२,१,१०; १४; ५,१,१३[२]; १४[२]; १६[२]; १७; १९; ४,१,५,१; ५,१,८; १२,२, २, ९; ११; १३, ४, ३, ८[s]; का ४,२,१,६; १०; ५,१,६[२]; ७; ८[२]; ९[t]; १०[२]; ५,१,५,१; ५,४,४; १५,४, ३, ६[s]; तै १,

*a*) =सपा काश्रौ ६,१,३३ । मा ११,२० तैसं ४,१,२,३ प्रमृ· विशिष्टः पाभे. । *b*) =अङ्ग-रस- (तु. सा.)। षस. अन्तोदात्तः । *c*) उस. । उप· णमुलन्तम् । *d*) नाप. । षस. अन्तोदात्तः । *e*) =वेदाङ्ग- । *f*) कस. पूप. प्रकृतिस्वरः उसं. (पा ६,२,४२) । पाठः? अङ्गविद् ब्रा° इति शो.धो विमृश्यः (तु. सा. Egg. च ) । *g*) =नृप-विशेष- । *h*) =जनपद-विशेष- । *i*) वैप१ द्र. । *j*) °अङ्गारार्चिर्धूमः इत्युत्तरेण समस्तमिव आन. ? *k*) सप्र. का ५, ५, ४, ६ ततः इति पाभे. । *l*) =भौम-ग्रह- । इवार्थे कन् प्र. । *m*) विप. (भस्मन्-) । तृस. । *n*) =संदंश-विशेष- । उस.उप. अव√क्षि ( क्षये ) + करणे ल्युट् प्र. ( तु. शं. [बृउ ३, ९, १८] PW. प्रमृ. च) । उप. प्रकृतिस्वरः । *o*) सप्र. श ११,६,३,३ का १३,६,३,२ जैमि २,७६ उल्मुकावक्ष° इति पाभे. । *p*) =अथर्ववेद-, ऋषि- । वैप१ द्र. । *q*) पाभे. वैप१ अङ्गिरः मा १२, ८ टि. द्र. । *r*) बहु. <आंगिरस्- (तु. पा २,४. ६५) । *s*) सपा. आश्रौ १०,७,४ शांश्रौ १६,२, १२ आंगिरसः इति पाभे. । *t*) सकृत् पाभे. अग्ने श ३,५,१,१५ टि. द्र. ।

६, ३, १; ८,२,१: २,१,१, १; २,३,५; ६; १०,५; ३,९, २१,१[२]; १०,३,१; ११,६,१; तैआ ३,८,१; काभ: ६२ : ७; जैमि १,१८३?[a]; २,१४;११७; १२०[३]; १२१;१२२[२]; १४२: २०९; २३५[३]; २९०; ३६२[२]; ३६५[५]; ३६६[२]; ३,४७[३]; ५१; ५३;६९[२]; ७७;१८७[५]; १८८[२b]; २५०; २६३; २६४; २८८; ३८१;३८२; तां ८,९.५: १२, ६,१२; ११,१०: १४,५,२५: १५,९.९; १६,१२,१[३]; १४, २[२]; २०,११,३[२]; ४: २४,२, २[३]; २५.२,२: १६,२; दै १,१; गो १,१,८[३]; ९; २९ : ३९; २, ९; २२: ३,४; ५ २४[२]; २५[२]; २,२.१९; ३,१७: ४,९; ६. १४[४]; -०रस: जैमि ३.१८८[c]; -रसम् गो १. १,८; -रसास्[d] ऐ ६.३४; श १,२.१.१३; १३, ४,३,८[e]; का २,१,४,११; तै १,१४.९; ३,२,७,६; १२,९, १; तैआ ४,३८,१; जैम १, १६८; २२४; २.११७; २९०; ३.२८; आ २.१६.४; गो १,१. ९; २०; २,२४;५,२५[२]; -रसे शांआ २,१७; -रसौ जैमि १, २२५; २,२३५; ३,२८;२९; तां २०.११.३; -रस्सु शां २८, ४: -रा : ऐ ५,२: शां २२.५; शांआ २,१७; श १,४,१,२५; ६,१,२,२८; ४,४,४; ५,२, ३–६; का २,३,४,२०; गो १, १,७; ५,२४; -रोभि: ऐ ३, ३७; जैमि २,१२०; ३६६; गो १,१,८[२];५,२४;२८[२]; -रोभ्य: ऐ ६,७; ३५; श ३, ५,१,१५; का ४,५,१,९; जै १,८१; २, ११६; ४०२; गो २,५,१३; ६, १४[२]. [°रस्– अथर्वन्°, पवित्र°, भृगु°].

**आङ्गिरस[f]**– -स: ऐ ३,२४;७, १७;८,१४;२१; शां ३०,६; ९; श १,२,५,२५; २६; ४,१,५, १; १४,४,१,९; २१; २६; ५, ५,२२; ६,३,१; ७,३,२८; का ५,१,५,१; ३; तै २,६,२,२; जैमि १,१,६०[२]; १८३[२]; ३, १५[२]; ३२[६]; ४३[२];५१[२]; ५३[२]; ५६[३]; ६२[g]?; ७७;१४७;१६३[२]; १६४; २०९[२]; २१७[२]; २१९[२]; २२३[3h]; २२९; २३३[२]; २८१; तां ११,८,८; १०; १२,३,२३; ५,११;१६; ६,१२[२]; ८,६;११, १०; १३, ३, २४; ११, १४; २२; १४, ३, २२; १०, ९; १५, ५, ११; १४; छुशा ७: १८; गो १,१,८; ५,२१[२]; २,१,१; २,१४; १५; -सम् शांआ १,४; श १,२,५,२५; का २,२,३,२२; जैमि २,१४;३, ६९; १२७; तां ८,८,२२; १२, ९,१८; आ १,९२;१९५;५१८; ५२०[i]; जैआ १,९२; १९५; ५१८; गो १,१,८; ३,१९; -सयो: आ, जैआ १, ३८५; -सस्य आ १,२५२[j]; ५११; ५४१; २,१५,८; आ, जैआ १, ३४; ३८; ५८; ७८; ११९; १८२; २३६; ३९३; ४२६; ४५८; ४७५; जैआ १,२८८[k]; ३४६[l]; २, १,६; गो २,४,३; -सात् श १४,५,५ २२; ७,३, २८; -सान् गो १, १, ८[२]; -सानि आ १,५५०; आ, जैआ १,१६५;५१६;५५६; दै १,१२; -साय तां १,८, ११; गो २,१, २[३]; -से आ २,२,५-६; जैआ २, १२, ५; -सैः गो १,१,८[२]; -सौ तां ११, १०, १०. [°स- १तिरश्चि°].

**आङ्गिरसी[m]**– -सी का ४, २,१,१०; तां ९, २, १४; -सी: तै २,२,३, ७; गो २, ६, १४[२]; -सीभि: गो १, २, १८. [°सी- आदित्या°].

**ϕआङ्गिरसानां-सामन्**– -म जैआ १,३५९.

**अङ्गिरसां-व्रत[n]**– -ते आ २, १७, १; २; जैआ २, ४, ९; १०.

**अङ्गिरसां-व्रतोपोह[n]**– -हः आ १,

a) आङ्गि° इति पाठः? यनि. शोधः (तु. जै६९)। b) तु. सस्थ. टि. २गो->गौः। c) सपा. जै१३६ अङ्गिरसः (द्र. ३) इति। d) बहु. < आङ्गिरस-। e) =अथर्व-वेद-। f) =ऋषि-विशेष-, =साम-विशेष-। अपत्याद्यर्थेऽण् प्र. तत्स्वरश्च। g) पाठः? अङ्गि° इति शोधः (तु. ऋ ५,११,६)। h) सकृत् पाठः? > अङ्गि° इति शोधः (तु. तत्रैव क्रिप.)। i) स्वःपृष्ठम् आङ्गिरसम् > सपा. जैआ १, ५२० ϕअङ्गिरसां-स्वःपृष्ठम् इति पाभे.। j) सप्र. जैआ १,२५२ काण्वस्य इति पाभे.। k) सप्र. आ १,२८८ वासिष्ठस्य इति पाभे.। l) तिरश्चेर् आङ्गिरसस्य > सप्र. आ १, ३४६ तिरश्च्याङ्गिरसस्य इति पाभे.। m) विप. (प्रजा- प्रभृ.)। नाप. (ऋग्-विशेष-)। व्यप. (अकूपारा-)। वैप१ द्र.। n) =साम-विशेष-।

५२८[a].

अङ्गिरसां-षड्विंशत्यक्षरणिधन[b]- -नेन जैमि २,४०२.

अङ्गिरसां-संक्रोश[b]- -शः जैमि ३, ४७[२]; तां १२,३,२२; -शाः आ, जैआ १,५२५.

ϕअङ्गिरसां-स्वःपृष्ठ[b]- -ष्ठम् जैआ १,५२०[c].

अङ्गिरसां-गोष्ठ[b]- -ष्ठः तां १३,९, २४.

अङ्गिरसांगोष्ठ-पुंस्ति[d]- -स्तिनो आ १,५१२[e].

अङ्गिरसां-द्वादशाह[f]- -हः तां २४, २.२.

अङ्गिरसां-निवेष्ट[b]- -ष्टः जैमि ३, २५०; जैआ १,४२५[g]ϕ; -ϕष्टौ जैआ १, ११९[h];४२०[i].

ϕअङ्गिरसां-निषेध[b]- -धः आ १, ४२५[g].

अङ्गिरसाम्-अधिवास-परिवास[j]- -सौ[k] जैआ १, ५१२.

अङ्गिरसाम्-अनुक्री[l]- -क्रीः तां १६, १४, १.

अङ्गिरसाम्-अभिवास[m]-परिवासस्[j]- -ससी[k] आ १, ५१२.

अङ्गिरसाम्-अयन[n]- -नम् ऐ ४,१७; शां १८,१०; श ४, ४,५, २०; का ५,५,३,१२.

अङ्गिरसाम् (अयन-) तां २५,१६, १.

अङ्गिरसाम्-उत्सेध-निषेध[j]- -धौ आ १, ४२०[i]ϕ; ५१४ϕ; जैआ १, ५१४.

अङ्गिरसां-पुरस्तात्पृष्ठ्य[l]- -ष्ठ्यम् तां २५, २,१; -ष्ठ्येन तां २५, २,२ϕ.

[?]अङ्गिरसोमुख[o]- -खान् जैमि ३, ३८१.

अङ्गिरस्-तम[p]- -०म श ७, ३, २, ८; तै ३,७,१,१;१२,१,१.

अङ्गिरस्य[q]- -स्याः जैमि ३,२३७[२].

अङ्गिरस्यानाम्-सामन्- -म जैमि ३,२३७[२].

अङ्गिरस्-वत्[p] श ६,१,२, २८; ३, १,३८[३];३९;४१;२, ९,३,३; ४; ४,१;४,४,१४;५,२, ३[२];४[२];५[२]; ६[२];३,१०[४]; ४,३; ४[२]-८[२];१७[४]; ७,१,१,३०[२];८,१,४, ८; १०,५, १,३[३]; तै ३,१०, २,१[४]; ११,१, १-२१;६,२[२]; १२,६,१;६;७,१, ५; ८, ३; तैआ ४, १७,१;१८, १; १९,१.

अङ्गिरस्-वत्- -वतः ऐ१,२२; तैआ ४,१०,५; -वते श १४, २, २, ११[२]; तैआ ४,९,२; ५,७, ११; -वान् तैआ ५,७,११.

अङ्गि(रस>)रो-मुख[r]- -खाः जैमि ३,३८२.

अ(ङ्गि>)ङ्गीरस्-> आङ्गीरस- -सः तै २,२,५,३;३, २,५[१]; ४, ६[१]; तैआ ३,१०,२;४; -सम् तै २,२,७,३;११ ५; -सस्य तै २,३,४,५; -साय तै २, २, ५, ३; तैआ ३,१०,४.

अङ्गु-> १अङ्गु-ष्ठ[p]- -ष्ठाभ्याम् तै १,६,१.३.

२अङ्गु-ष्ठ- -ष्ठः श ११,५,२,१;-ष्ठयोः श ३, १,२,४; का ४,१, २, ३; -ष्ठाः श १०,१,१,८; -ष्ठाभ्याम् श १,३,५,७; का २,३,३,५.

३अङ्गुष्ठ[s]- -ष्ठः शांआ २,५[२]; -ष्ठम् तैआ १०, ३८, १; -ष्ठौ जैमि ३, २२१. [°ष्ठ- अनामिका°, निर्°].

अङ्गुष्ठ-मात्र- -त्रः तैआ १०, ३८, १.

अङ्गुरि- सु°

अङ्गुल- -लानि काअ २१ : ३; ४[२];५; ६[२]. [°ल- अष्टाविंशति°, चतुर्°, चतुर्विंशति°, त्रयोदशन्°, त्रि°, दशन्°, द्वात्रिंशत्°, द्वादशन्°, द्वि°, षष्°].

अङ्गुल-मात्र- -त्रम् ष ४,४,१४.

अङ्गुलि[p],ली- -लयः ऐ १,१९; ऐआ १,१,२;४,२,२;३,५;८; शां २९, १; शांआ ८, ९; श १, १,२, १६; ३, २, ३, २३; ८, ४, १; ४,३,३,४;६,२,१,२३;२,४; ७, ५,२,४४;६२[१];८,४,३,१०-१९; ९,१,१,३९; १०, १,१,८;२,१, २;६,१४;११,५,२,३;५;६;१३, ५,१,६; का २, १,२,१२; ४,१, ४,१५; २,३,१५; ३,२,१३;

---

*a*) सप्र. जैआ १,५२८ मरुतांव्र° इति पाभे. । *b*) साम-विशेष- । *c*) पाभे. आङ्गिरसम् आ १, ५२० टि. द्र. । *d*) =सामद्वय-विशेष- । *e*) सप्र. जैआ १,५१२ मरुतां गोष्ठा-पुं° इति पाभे. । *f*) =सत्र-विशेष- । *g*) सपा. °वेष्टः <> °षेधः इति पाभे. । *h*) सपा. आ १,११९ वसिष्ठस्य निवेष्टौ इति पाभे. । *i*) सपा. °निवेष्टौ <> °उत्सेधनिषेधौ इति पाभे. । *j*) =साम-विशेष- । उप. द्वस. । *k*) सपा. °अधिवासपरिवासौ <> °अभिवासपरिवाससी इति पाभे. । *l*) =एकाह-विशेष- । *m*) °भी° इति BI., राम. । *n*) षस. उभयपदप्रकृतिस्वरः (पा ६,२,१४०) । *o*) पाठः? अङ्गिरोमु° इति शोधः (तु. जैमि ३,३८२) । *p*) वैप१ द्र. । *q*) व्यप. (आङ्गिरस-) । अपत्यार्थे यः प्र. उसं. (पा ४,१,१०५) । *r*) विप. । बस. । *s*) निस्स्वरतया पृथक् निर्देशः द्र. ।

१४[a]; ८,४,१; ५,३,४,३; जैमि २,७०; ३४२; ४१४;३, ३०२;३१९[५];–लिः का २,१,४, ५[b]; –लिभिः श १,८,३,१८[२c]; ४, ३,३,४;.१०,२,१,२;३; का ५,३,४,३; –लिभ्यः श ७,५,२, ४४; का ९,५,४, ५; –लिभ्याम् शां १६,५; –लीः शांआ २, ५; श ३,१,३, २५; २, १,३६;३७ ३,२,१४[a];४,३, २-५;९; ६, ३, २१; का ४,१,३, १७; १८[d]; २, १,२५;२६[२]; ३,२,१३; ४,३,८; ६,३,१७; तै २, ६, ५, ४; जैमि २,१६१; –लीभिः का २, ८,१, १७[c]; –लौ तै ३,३,८,३; –ल्यः तां २३,१४,५;–ल्या श १,२,१, ७[b]; ३,३,२,१९; जैमि १, ४१; ४३;३, १३९; लुशा ६१ : १५. [°लि- अन्°, न्यक्त°, पद्य°, विंशति°, समक्ण°, हस्त्य°].

**अङ्गुलि-निग्रह[e]-** -हाः शांआ ८,९.

**अङ्गुलि-प्रणेजन[f]-** -नम् श १,२,२, १८;३,३; का २,२ १,१५;१७.

**अङ्गुल्य[g]-** -ल्यानि गो १,३,१८.

**अङ्गुल्य(ल-अ)ग्र[h]-** -ग्रेभ्यः श ८, १,३,८[२];९[२].

**अङ्गोष->अङ्गोषिन्[i]-** -षिणम् जैमि ३,१७४[j].

**√अङ्घ्[j]>अङ्घ्रि-** -ङ्घ्रिणा श १, ४,५,२; का २,४,२,८.

**अङ्गारि[j]-** -रिः तैआ १,९,३[k]; तां १, ४,७[l];-०रे[k] श ३,३,३,११; का ४,३,३,११.

**अङ्घृणि[m]-** -णये[n] तैआ ४,१६,१.

**√अच्,ञ्च्,** अचते श ३, ४, ३, ३; ५;९[o]; अचति का ४, ४,३,८[o]. अञ्चति जैमि १,१६६; आञ्चन्त श ३, ४, ३, २; ४. [अनु°, अप°, अपि°, अव°, आ°, उद्°, उप°, नि°, प्रति°, सम्°].

अक्ण- जानु°, सम्°.

१अक्त- उद्°.

अक्न- आ°, नि°, परि°.

अच्, ञ्च्- अधर°, अनु°, अप°, अपि°, अर्वा°, अव°, अस्मद्रि°, ईध्रि°, उद्°, उरु°, ऊर्ध्व° कद्रि°, तद्रि°, तिरस् > तिरि°, दक्षिणा°, २दधि°, देवद्रि°, नि°, परा°, पुरु°, पूर्व°, प्रति°, मद्रि°, यद्रि°, विषु°, श्विति°, सत्रा°, समि°, सु°.

अच्य अप° अव°, आ°, उद्°, उपनि°.

अञ्चन- उद्°, नि°, सम्°.

अञ्चयित्वा उद्°.

अञ्चिन्- परा°.

आक- उप°.

आचम् उद्°, नि°.

च- तिरस्°.

**अ-चक्रवस्-** -वान् तां २१,१,८[p,q].

**अ-चक्रु[r]-** -क्रुः[p] जैमि २, २५०[s].

**अ-चक्षुष्क[t]-** -ष्कम् श १४, ६,८,८.

**अ-चण्डाल-** -लः का १६, ६, ३, २२[२u].

**अ-चय[v]-** -येन तै ३,१०,३,१[w].

**अ-चयन-** -नस्य श ९,५,२,११.

**अ-चरण-** -णेन श २,६,१,३[x]; का १.६,१.२.

**अ-चर(त्→)न्ती[j]-** -न्ती तै २,८,४,८.

**अ-चरम[j]-** -माः ऐ ७,९; तै २,८,५,७.

**अ-चरितवत्-** -वान गो १,२,६.

**अ-चरितिन्[y]-** -तिनः गो १, १, १३.

---

*a*) सपा. °ल्यः<> °लीः इति पाभे. । *b*) सपा. °लिः <> °ल्या इति पाभे । *c*) सपा. °लिभिः<>°लीभिः इति पाभे. । *d*) सपा. अङ्गुलीर्न्यचति>श ३, १, ३, २५ मुष्टीकरोति इति पाभे. । *e*) =अङ्गुलि-पर्वन्- । उस. उप. नि√ग्रह् + करणे अच् प्र. । *f*) =उदक- । कास. उप. प्र√णि (<नि)ज्+(करणे) ल्युट् प्र. प्रकृतिस्वरश्च । *g*) =अङ्गुलि-पर्वन्- । अवयवार्थे यत् प्र. । *h*) नाप षस. अन्तोदात्तः । *i*) व्यु. पाभे. च वैप१, कौ २. ४६७ टि. द्र. । *j*) वैप१ द्र. । *k*) पाभे वैप१ अङ्गारे टि. द्र. । *l*) पाभे. वैप१ अंहारिः क २७ टि. द्र. । *m*) =अघृणि- । तेनैव समानन्यायं द्र. । √*अङ्घ् (दीप्तौ) इति च विशेषः (वैतु. भा. AVL आघृणि- इत्यस्य वावि. इति; भा. ⌊पक्षे!, सा. यक्र. अंहसां हन्तृ- इति च अङ्गनेन दीप्यमान- इति च प्रतिपन्नौ; AVL ⌊पक्षे⌋ अ-घृ° इतीव) । *n*) सपा. माश्री ४,४,४२ आघृणये इति पाभे. । *o*) सपा. अचते <>अचति इति पाभे. । *p*) सपा. परस्परं पाभे. । *q*) C. आचक्र° इति? । *r*) तस. उप. √कृ+कुः प्र. उसं. (पाउ १,२०) । *s*) C. (तां) आचक्रुः इति ? । *t*) विप. (अक्षर- ⌊ब्रह्मन्-⌋) । बस. समासान्ते कपि स्वरः (पा ६,२,१७३) । *u*) सपा. श १४,७,१,२२ अचा° इति पाभे. । *v*) =अशक्त-चयन- । तस. अन्तोदात्तः (पा ६,२, १५७)उप. <√चि (चयने) इति (तु. भा.) । *w*) तु. मैसू. वैतु. आन. चयेन इति । *x*) अनुचरणेन इत सा ? । *y*) तस. उप. भावे क्तान्ताद् इनिः प्र. (पा ५, २,८८) ।

?अचक्रुधि मं २,१,१६[a].

अ-चर्य[b]- -र्यौं जैमि १,५[२c].

अ-चल[d]- -लः जैमि १, ८९; -लानि ष ५,११,२.

अ-चाण्डाल[e]- -लः[f] श १४, ७,१, २२.

अ-चित[e,g]- -तः श ७,२,१,१५:३, १.१:८ ७.२, १०; -तम् तै ३, ११,६,१; -तस्य श ८, ७, २, १०; -ते श ७,३,१,२;३.

अ-चिति -त्या तै ३ १०,४,२[h].

अ-चित्त[i]- -त्तान् तैआ ४, ५.५.

अ-चिष्टु[i]- -ष्टुः तै २, ६, ८, ४[j]; -ष्टुम् तै ३.६,२,२.

?अ-चीर[k]- -रम् तैआ ७,४,२.

?अ चेतस्[l]- -ताः तैआ १,११.६.

अ-चोदस्[l]- -दसः सा २,३,९.

अच्छ, अच्छा[l] ऐ१ २१;५,८;१६[m]; शां २३ ३: श १.४,१.२७[२n];३, २.४,१०[२]; ५,१,१६[o]; १२, ६, १,५; १३ ५ १,११; का २, ३, ४, २१[२n], तै २, ४, ३ १२; ५, ८, ८; ६, ९, १; ८,१,१; ३,१,१, ९; २, २, २; ५, २, २[n]; जैमि १, १०४; ३,१७४; गो २,४,१६.

अच्छ √गम्, अच्छजग्मुः शां १२, १[p].

अच्छ √चर्, अच्छचरसि जैमि ३, ३१[२]; अच्छचरामि जैमि३,३१; अच्छाचरन् ऐ ३,२५.

अच्छ √नी, अच्छ····नयति तै २, ८,५.८.

अच्छ √पत् , अच्छा(च्छ-अ)पतत् श १,७, १,१; ३,३.४, १०; का २,६,३,१; अच्छापतत् श ३, २, ४,२; ४, ३ २,७[३]; का ४,२,४, १; ६,२, ४[q]; ५,३,३.५.

अच्छ-युत्- अच्छे द्र.

अच्छ, अच्छा √या, अच्छ····याहि तै २,७,१३,१[r];अच्छा···याहि तै २,८.६,४.

अच्छ,च्छा √वच्, अच्छेचे जैमि २, २६९; अच्छा·····ऊचिषे श ७, १,१, २४; अच्छा(च्छ-अ)वोचत जैमि २,२७०.

अच्छा-वाक[l]- ॰॰क ऐ ६, १४; ३०; शां २८. ५[२]; श ४ ३,१, १; का ५,३,२,१; गो २, ६,९; –कः ऐ २,३६[१];३,५०; ६,४;६; ८;११;१२;१४;१५[२];१६[२];१९[२]; २०;२२;२४; शां १३,८;२८,३ ४;६;७;९[२]; २९, ३; ८;३०,९[४]; १०[२]; श ३,६,२,१२;१३;४,३, १,१[२];२;३[२]: का ४,६.२.६; ५, ३,२,१[२];२;३[२]; तै ३,१२,९,४; जैमि १.३१९;२,३७८;३,३६९; ३७४; तां २५,४,६;१५,३;१८, ४; लुशा ७१:१८; गो १.५,२४; २,२.२१;२२;३, १५; २३[२];५, १२; १४[२]; १५[४]; ६,१;२[२]; ४; –कम् ऐ ६, ८; शां १३, ८; श १२, १, १, ८; जैमि २. ३७८; लुशा ७१ : १८; गो १,४ ६;२, ५,१४; –कस्य ऐ ३, ५०.६ ६, ७;१०; १४;१५; ७,१; शां १३; ८; १६,११; २५,११,१३. २८, १०;२९ ३[१];७; श ३,६,२.१२; का ४,६.२,५: जैमि १,३१९;२, ८२;१५२[३];१७१[२];२२३;२२४[२]; २२६[२]; तां १८.५,१५: २०,८, १[२];९,१[२];२१,१०,२;३[२]; गो १, ३,१८; २,२,२०; ३,१५; ४,३; १४ ; १७[२]; ५, १०; १२; १३: ६,७; -काय ऐ ६,२९; शां २८, ४[२];२९,७; ३०,३; ८;९; श ४, २,३,३;५;१४;३, ४,२२; ५.४, ५.२२; –काय का ५.२, ३,२[२]; १०;४,१. १८; ७, ४,१.२१; तै १, ८, २, ४; जैमि १, १८८; ३४८; २, १११; १५२ : २०२; २०३; तां १८, ५, १४; गो २, ६,८; –के श ४,३, १, ३[२];४[२]; का ५,३ २,३[३].

*a*) पाठः? अचक्रुपुः इति शोधः ( तु. सपा. पाभे. वैप१ अचक्रुपुः शौ ६, ३०, १ टि. ) । ॰क्रुपुः<>॰क्रुधि इति मूलतः लैवि. द्र. । *b*) तस. उप. √*चृ(अपाये) +कर्तरि यत् प्र. उसं. (पा ३,१,१०५) । *c*) अजर्यौ इति मूको. । सकृत् पाभे. वैप१ अजुर्यौ तैसं ३,२, २, १ टि. द्र. । *d*) तस. उप. कर्तरि अच् प्र. । *e*) तस. नञ्-स्वरः । *f*) पाभे. अचण्डालः का १६,६, ३, २२ टि. द्र. । *g*) उप.<√चि ( चयने ) । *h*) तु. मैसू. । तस. उप.<√चि(चयने [तु. भा.; वैतु. आन. अचित्ति–>-त्त्या इति [तु. सा.]) । *i*) वैप१ द्र. । *j*) वैतु. सा. लुङि प्रपु१ (=अचैषीत्) इति । *k*) स्वरूपम्? ची(<चि) रम् इति भा. सा., शं (तैउ १,४,२) च । शं. ( पक्षे ) अचीरम् इति च, तथा सति स्वरः? । वा. क्रिवि. । *l*) विप. । बस. उप. आद्युदात्तः उसं. (पा ६,२,११९) इति? । वैप१ अ- चेतस्- इति । *m*) वैप१ २अच्छ ऋ ७,९२,३ टि. द्र. । *n*) वैप१ २अच्छ ऋ ६, १६,१२ टि. द्र. । *o*) आनन्तर्यार्थे स्वाअ. । *p*) ॰जग्नु इति आन.? । *q*) सपा. अच्छापतत्>श ३,६,२,८ आहरत् इति पाभे. । *r*) वैप१ अच्छ···याहि ऋ ३,३५,१ टि. द्र. ।

अच्छावाक-साम॒न्[a,b]- -म श १३, ३, ३,६[१०]; का १५, ३,३, ६[२०]; जैमि १.१५५; १८८; १९०; १९१; २१७; २२३; २२८; ३०९[२]; २,८४; ११४; ३७८; ३, २७; ३४; ५०; ५६; ७५; ८३; १०३; १३४; १५८; १९०; २०४; २२१; २३९; २६४; छुशा ७२:३; तां ८,१०,१; ३; ५:७; ९; १२,४,२३; १०, २३; १५, १०, १४; १८,११, १०; २१,९, १५; -म्नः तां ८,८,२६.

अच्छावाकी(य→)या[d]- -या ऐ २,३६; जैमि २,२०३; -याम् ऐ २, ३६; ३, १३[२]; शां २८, ४[२]; गो २,३,१५[२]; -यायै शां ३०,९.

अच्छा √गा, अ॒च्छा(गासि) शां २८,५.

अ॒च्छाजिगासि श ७,१,१,२४.

अ॒च्छा.....गात् तै २, ५,८,१०.

अच्छा √नश् (व्याप्तौ), अ॒च्छानक्षि श २,३,४,३१; का १,४,१,२२.

अच्छा √नी, अ॒च्छा......नयन्तु श १४,१,२,१५; तैआ ४,२,२;५, २,६.

अच्छा √नू, अच्छा(अनूषत) सा २, ५,३.

अच्छा √ब्रू, अच्छाब्रूते जैमि २, २६९; अच्छाब्रूत, अच्छाब्रूष्व तां १३,६,९; अच्छाब्रूवीय जैमि ३, ३९१[e].

अच्छा √वद्, अ॒च्छावद श ५,२,२, १०; तै २,४,५,५[f].

अच्छे(च्छ,च्छा √इ), अ॒च्छैति श ३, ६,४,२; ९,२,२[g]; ३, १२; १४; ७,१,१,२४; का ४,६,४,१[२]; ९, ३,१०[४]; १२; तै ३. २,२,१; २; ४,२०; तैआ ५,२, ६[२]; अच्छै॒ति श ३,२,४,२०; ९,२,२[h]; का ४, २,४,१८; अ॒च्छयन्ति श ६,३,३, १; अ॒च्छा...यन्ति तै २, ८, २, ४; अच्छा......एषि जैमि ३, २०७[i]; अ॒च्छेमः श ३, २,४, १२; ६, ३, ३, ३[२]; अच्छ...यन्तु जैमि ३,३०; अच्छ(यन्तु) जैमि ३. २९६[२]; तां ११, १०, ४; अ॒च्छेहि श ३,२,४, १२; १७; २०; का ४,२,४,९; १४; १८[२].

अच्छ-यु॒त्[j]- -यतुः[k] का ४, ९, ३,१३.

अ॒-च्छदि(स्>)र्-दर्श[l]- -र्शे काखा ७९:१५; ८४:१; तै ३, १२,५,३; तैआ २,११,१.

अ-च्-छन्दस्[m]- -न्दः तां २१,९,९.

अ-च्-छन्दस्-कृत- -तः,-तम् शां ३,२.

अ-च्-छन्दोम[m]- -मम् तां २३,१९, ८; २४,३,२;११,६.

अ-च्-छन्न- -न्नाः, -न्नैः जैमि १, २७४.

अ॒-च्-छम्बट्कार[n]- -रम् काग १२२:१२[n]; तै १.१,३,७; २,१, ३; तैआ ५,२,८; -राय श ११, ५,६, ९; १३, ४,१, १२; जैमि २,३५९.

अ-च्-छम्बट्कारिन्- -रिणम्, -री जैमि १.२४८.

?अच्छात्[o] तै २.८,८,१२.

अ-च्-च्छा(या>)य॒[p]- -यम् श १४,६,८,८.

अ-च्-छिद्यमा(न→)ना- -नया मं १,५,३.

अ॒-च्-छिद्र,द्रा[q]- -द्रः ऐ २,३८; जैमि १, २४८; २. ३१०; ३, २१८[१]; -द्रम् ऐ २,३८[२]; ८, २७[२q]; श १, १,३,६; २.२, १३; ३,१,३, २२; ८,१,६; का २, १,३,३; २, १,१०; ४, १,३.१५; ८,१,४; तै २,८,६,७; ३,२,५,२; ७,४,१२; ६,१३; जैमि १,२४८; ३,२१८[e]; जैआ १, ५१२[r,s]; तां १४, ९, ३५[r]; -द्रया श ११,७, २, ६[२]; तैआ ३,४,१[२]; -द्रस्य जैमि ३, २१८[r]; तां १४, ९,३६[r]; -द्रा ऐ २,३८[t]; -द्राः तै २,८,६,६; मं २,८,३[r]; ४[q]; -द्राम् मं २,५,

*a*) वैप१ द्र. । *b*) चस. अन्तोदात्तः । *c*) पाभे. वैप१ °साम॒म् तैसं ५, ४, १२, ३[२] टि. द्र. । *d*) =होत्रा- । भावे छ>ईयः प्र. (पा ५.१,१३५) । *e*) सपा. जै २०९ °ब्रुवीय इति पाभे. । *f*) वैतु. भा. सा. च तव॒स्- (=बल-) इति मिथ्याध्यवसायौ सन्तौ द्वि. युक्तः कप्र. अ॒च्छा इति । *g*) सप्र. का ४,९,२,२ आ॒हरति इति पाभे. । *h*) सप्र. का ४ ९,२,२ आहु॒रति इति पाभे. । *i*) पाभे. वैप१ अ॒च्छा···एषि टि. द्र. । *j*) गस. उप. प्रकृतिस्वरः । *k*) वि. स्वरः (पा ६ १,१७३) । *l*) विप.>नाप., तस. नञ्-स्वरः । उप. वैप१ द्र. आद्यन्तस्वरः पाठः? यनि. शोधः । *m*) विप. । बस. । *n*) अश्छम्बट्° इति पाठः? यनि. शोधः । *o*) शोधार्थं वैप१ (√छद्, न्द् >) अच्छात् ऋ ६,२८,५ टि. द्र. । *p*) विप. (अक्षर-) । बस. अन्तोदात्तः । *q*) पाभे. वैप१ अ॒च्छिद्रम् ऋ ८, २७,९ टि. द्र. । *r*) =साम-विशेष- । *s*) सप्र. अच्छिद्रं च रयिष्ठं च>आ १, ५१२ इन्द्रस्याच्छिद्ररयिष्ठे इति पाभे. । *t*) पाभे. वैप१ उशि॒जः तै ५,६,८, ६ टि. द्र. ।

१४; -द्रे ऐ २,६; श ६,४,१, १०[२]; तै ३,६,६,३; जैमि २, ३९५?; -द्रेण ऐ ३,१८; श १, १,३,६[२]; ४,२३;२,१,१९;२१; ३,१,२३;२४; ३,१,३,२२; ५, ३,५,१६; का २,१,३,३[३];२४; ४,१८;१९; २,२,४,१८[३]; ४,१, ३,१५[२]; ७,२,४,१३; तै ३,२, ५,२; जैमि २,३१०[२];३,२१८[३]; तां १४,९,३६[a].

अच्छिद्र-ता- -तायै जैमि ३,९१; तां १८,५,४;६;८-११;२१,७,५

अच्छिद्र-त्व- -त्वम् जैमि ३,२१८; तां १४,९,३६.

अ-च्-छिन्न[b]- -न्नम् तै २,६,८,४; तैआ २,६,१; -न्नस्य श ४,२,१, २२; का ५,२,१,१९.

अच्छिन्न-प(त्र→)त्रा[b]- -त्राः श ६,५,४,८[२]; ७,५,१,८[c]; का ९, ४,२,६[c].

अच्छिन्न-पयस्[d]- -याः तै ३,७, ६,११.

अच्य √अच्, ञ्च् द्र.

अ-च्याव्य- -व्यः जैमि २,१७२[२].

अ-च्युत्[e]- -च्युत् जैमि २,१३.

१अ-च्युत, ता[b]- -ताः का ३,१,१२, २९[f]; -तानाम् श ४,२, ४,२४; का ५,२,४,१७; -ताम् तैआ ३,११,७[२].

अच्युत-पाजस्[g]- -जाः तैआ ३,५, १[h].

अच्युत-मनस्- -नाः तैआ ३,५,१[i].

अच्युता(त-अ)क्ष(र>)रा[j]- -रा तैआ ६,८,१.

२अ-च्युत, ता[b]- -तः श १,४,२,१६; ५,३,२२; ६,१,६;५,२; ७,३, १०;९,१,९; का २,४,१,१०; ५,१,१८;४,६;८ २,५;-तम् श १,६,१,६;-ताः का ४,३,३,१४.

३अ-च्युत,ता- -तः ऐ २,३; ३ १६[२]; ४,३१[२]; ५ १[२]; ४; ७; १२; १६; १८; २०; शां १०, ५[२]; ६[२]; -तम् शां २३,४; तैआ ५,६,४[२]; १०,११,१; जैमि २,४१९; ४२४[३]; -ता ऐ २,२२; ४,३१;३२;५,१; २;४; ५,७;८;१५-२१; शां १६,४[३]; १८,११; -ताः ऐ ४,३१; -तात ऐ ५,९[२]; गो २,६,१०[२]; -तानि शां २९,७; ३०,२.

अच्युत-क्षित्[b]- -क्षित् श ३,५, २,१४; का ४,५,२,९.

अच्युतक्षित्-तम- -मः श ४, २,४,२४; का ५,२,४,१७.

अच्युत-क्षिति[k]- -तये तैआ १०, ६७,१; तैआआ ६७.

अच्युत-च्युत्[l]- -च्युत् जैमि ३, २३४; लुशा ५:१०.

अच्युत-पर्यास[m]- -सः शां ३०,९.

√अज्(वधा.), अजतः जैमि १, १६६[१]; २,४२१; अजन्ति जैमि ३,३२८; अज तैआ ६,१०,२; अजामहै[n] का ६,१,१,३; अजामहै श २,४,३,४; ५,१,१,३[b]; का १,३,२,४; आजन्त श २,४, ३,४; ५,१,१,३; का १,३,२, ४; ६,१,१,३.

अज्यते जैमि ३,२४०?. [अप°, अभि°, अभ्यव°, अभ्या°, आ°, उद्°, प्र°, सम्°].

१अज,जा- आ°, सम्°.

अजत्- -जन्तौ जैमि २,४२१.

अजमान- प्र°.

अजिर,रा[b]- -रः जैमि १,२६[p]; तां २५,१५,३[q]; -रम् तै ३,६ ८,२; १०,१,४; तैआ ३,१४,३; -रा तै ३,७,६,९; -राः काकू ९०: ६; -०राः[r] जैमि १,७९; तां १, २,५; -रासः तै ३,१०,१,४.

अज्मन्[b]- -ज्मा तैआ ३,१०,४[s].

अज्र- घासे°.

आज- नौ°.

२अज,जा(वप्रा.)[b]- -जः ऐ २,८[२]; शांआ १,१; श २,१,४,३[२]; ६,१,१, ११; २,१,१५;२,६;१,५; ३,१, २८[२];४,४,४; १२[३]; १३; १५[३]; ७,५,२,२१;३६[t]; १०,२,१, १; १२,७,१,२;११; १४,७,२, २३;२९-३१; का १,१,४,२[२];९, ५,२,९[t]; काअ ६१:३; तै २,५,

---

a) =साम-विशेष- । b) वैप१ द्र. । c) पाभे. वैप१ अखिद्राः काठ ३९,३ टि. द्र. । d) विप. (उत्स-[प्रवाह-]) । बस. पूप. प्रकृतिस्वरः । e) विप.(इन्द्र-) । तस. उप. < √च्यु । f) सपा. श ११,१,६,३५ अनपोद्धार्याः इति पाभे. । g) =ऋषि-विशेष- । बस. पूप. प्रकृतिस्वरः । h) पाभे. वैप१ अचित्तपाजाः मै १,९,१ टि. द्र. । i) पाभे. वैप१ अचित्तमनाः मै १,९,१ टि. द्र. । j) विप. (स्वधा-) । बस. पूप. प्रकृतिस्वरः (तु. सस्थ. अयुताक्षरा-) । k) =देव-विशेष- । बस. । l) =ऋषि- विशेष- । m) विप. (अच्छावाक-) । बस. । n) सपा. परस्परं पाभे. । o) पाठः (तु. सप्र. जै १७१ आज्यते इति पाभे.) । p) =वायु- । q) =सर्प-विशेष- । धा. अर्थः ? । r) सपा. तै ३,७,९,१ अतिथयः इति पाभे. । s) पाभे. वैप १ अज्मम् ऋ ३,२,२ टि. द्र. । t) पाभे. वैप १ अजः मा १३,५१ टि. द्र. ।

२,३; ६,११,१; ३,१,२,८[a];५, १०; तैआ ६, १,४;१०,२; १०, १०,१[2]; जैमि २, २६१; ३७१; ३,३४९; तां १,४,१२; १०, २, ५;१८,९,१९; २१,१४,११; गो २, ३,१९; -जम् ऐ २, ८[1]; श १,२,३,६[2]; ९;६,४,३; २,१,४, ३; ६,२,१,२;५; ३,२,४; ९;४, ४,४; ७,५,२,६; १६;२१; १४, ७,२,२९; का १, १,४,२; २,२, १,२०[2];२२; ६,२,३; तै ३,१, २, ८; जैमि १, ६८; ३, ३४९; तां १ ८,४; गो २,३,१९; -जया का ४, ३, ३,७[b]; ८, १४; -जस्य श ६, २, २, १५; ४,४, १०; १५; ७,५,२,३६; तै १, ५, १, ५; ३, ७, ३, २[3]; ष ४,१,१२; गो १,२,१८; -जा श ३,३,३,८; ९[2]; १८;६, ५,४,१६; १३, ५,२,१८; १४, ४,२,९; का ४, ३, ३,८[1]; तै १, ३,७,७; ३,७,३,१; तैआ ४,४२, ५; ५, २, १३; जैमि १, २९४; ३३३[2]; २, ३४; १३८[2]; ४०३; -जाः श ४,५,५,२;४;५;९; ५, २,१,२४[c]; ६,५,४,१६;८,२,४, १;१२,७,२,७; का ५,६,७,१; २;७,५,१,१[2d]; जैमि १,२५२; ३,२६३; तां १६,१,१०; सा १, १,१७; -जात् ऐ २, ८; -जान् श ५५,४,१[2d]; कास्वा ७७ : ७; तैआ २,९,१; -जानाम् जैमि २, ८७; ३७१; -जाम् श ३. ३,३. ९; का ४, ३,३,८[2]; तै २.१ २, ४; ३,७,३,२; तैआ २,६,२ ३, १०,३; ५, २,४; १०, १०, १; जैमि १, १२०; १४२; १५८; १८१; २,३०[e]; ४४; -जाय तै ३, १.५, १०[2]; -जायाम् श ३, ३.३,८[b]; तै ३, ७, ३,१: -जायै श ६, ५,४, १६[1]; १४, १, २, २५; तैआ ५,१०,२; -जासु का ६, २,२,१९[c]; -जे ऐ २,८; श ६,३,२,४;४,४,४; ५,१,४;१३, ५,२,१०; -जेन श ६, २.१,७; ३,२,९;४,४, १०. [°ज,जा-महत्, मानुष°°].

अज,जा-क्षीर[f]- -रम् श १४, १,२, १३;२,१, १८; तैआ ५, ३, ९; -रेण तैआ ५,३,९.

अज-गा़ळ[g]- -ळम् तै ३,४,९,१.

अज-पेत्व[h]- -त्वान् तै १,२.५,३.

अज(ज-ऋ)र्षभ[i]- -भः श ५, २, १, २४[j]; -भस्य श ५, २,१, २१; २४[2k]; -भे का ६,२, २, १९.

अज-लोम[g]- -मानि श ६,४,४,२२; ७,५,२,४३; -मैः श ६, ५, १, ४[3]; तैआ ५,२,१३.

अज-स्वरूप[l]- -पम् कागा १२३ : १.

अजा(ज-अ वि[g]- -वयः श ४, ५,५, ६; १३, ३,२,३; १४, ४,२,९; का १, ४,२,१०; ५, ६, ७, २; १५,३,२,३; १६,३,४,४; तै ३, ९, ९, २ ; तैआ ३, १२, ५; तां २४, ११,५; -वी तै ३, ९, ८,३.

अजा(ज-अ)वि (का>)क[m]- -कम् शां ११, २; जैमि १, २६३; २, २७८; ३, १०९; -कस्य श ४, ५,५ ४; १२, ८,१, १३: -केन श १२. ८,१,१३. [°क-बहु].

अज़ा(ज-अ)श्व[g]- -श्वः तै २,८,५, ४; कापा ९३ : ७.

अजकाव- -वम्[n] श ४, १, ५, १९; का ५,१,५,१४.

अजगन्त √गच्छ्, गम् द्र.

अजगर[o]- -रः जैमि २, ३५१[2]; -रम् गो १,२,२; -राः जैमि २, २६६; २६७; -रे गो १,२,२.

अजगाव- -वः तां २५,१५,३[p].

अजत्- √अज् द्र.

अ-जन[q]- -नम् श ११, ५,१,४; -ने श ११,५,१,३.

अ-जप(प→)पा[r]- -पया ऐआ ५, १, ४; का १३,५, १,३; ११,५.

अजमान- √अज् द्र. ।

अजमायु[s]- > आजमायव[t]- -वम् आ,जैआ १,३०८.

अजयित् √जि द्र.

*a*) पाभे. वैप १ आदित्यः मै ४, १४, १४ टि. द्र. । *b*) सपा. अज़या<>अज़ायाम् इति पाभे. । *c*) सप्र. अज़ाः <> अज़ासु इति पाभे. । *d*) सप्र. सकृत् अज़ाः<>अज़ान् इति पाभे. । *e*) अजम् इति मूको. । *f*) षस. अन्तोदात्तः । पूप. ह्रस्वत्वविकल्पः (पा ६,३,६३) । *g*) वैप१ द्र. । *h*) द्वस. अन्तोदात्तः । *i*) कस. अन्तोदात्तः । *j*) सपा. का ६,२,२,१९ ऋषभः इति पाभे. । *k*) सपा. अजर्षभस्य, अजिनम्>का ६, २,२,१९[2] बस्ताजिनेन इति पाभे. । *l*) विप. । बस. पूप. =ब्रह्मन्- । *m*) द्वस. एकवद्भावः (पा २,४,११) अन्तोदात्तश्च । *n*) व्यु. पाभे. च वैप४ अजकाव->-वम् काश्रौ ९,२,६, टि. द्र. । *o*) वैप४ द्र. । *p*) व्यु. पाभे. च वैप४ अजगाव-> -वम् टि. द्र. । *q*) =निर्जन- (स्थल-) । बस. अन्तोदात्तः । *r*) विप. (आवृत्-) । बस. । *s*) =ऋषि-विशेष- । *t*) =साम-विशेष- ।

अ-जय्य्,य्या[a]– -य्यम् का ४, ४,२, ३[b]: जैमि २, १३३[2]; -य्याम् जैमि २, १३३[2].

अ-जुर,रा[c]– -रः शांआ ५,८; श १४ ७,२,३०;३१: ८,१५, १२; का ३,१,१०,३; ४. तै २, ४,१.७; ११; ३,११,८; तैआ १०,११ २; -रम् ऐ २, २; ५, ८; शां २३,३; श ४ २, ३. १; ४, २ १०, १,४,१[2];८[2]; १४ ६ ८,८; का ३.१,१०,३,४; ५, २,३,१; ४,१[3]; तै २, ४, १, ४; ६. १६,२;८,८,१०; ३. १,१,८:६, १,१: ७.५.११[d]; तैआ ३, ११, ९; काठ १३४:१२[e]; -रस्य जैमि ३,८८[f]; -रा श ४, २,३, १;४,२; का ५,२,३-४,१; -राः तै ३. १,२,६: तैआ ४,५. ५: जैमि ३,२०७; -रासः तै २, ७,१२,१; -रेभिः तै २, ८,२, ४[g]; -रौ श ९,४,४,४.

?अ-जरस[h]– -सम् जैमि ३,१०२.

अ-जर्य,र्या[a]– -र्यम् श ३. ४, २,४[b]; -र्याम् मै २,२,१८[i].

अ-जस्र,स्रा[c]– -स्रः ऐ १, २८[2]; श ६,४,१,११; ५,१,७[2]; ७,४,३: ७,५,२,१९; ११, ६,२,२; काअ १२ : ९: तै २.५. ८,९[j]; -स्रम् श २,३,४, ३७; ६, ४,१,११[2]; ७,४,३; ७, ५,२,१९; ९ २,३. १२[2]; का १, ४,१. २६; तै १. १,७,२; २,१.२४; ३. ७,४,५: तैआ ३ ११.८; -स्रान् ऐ ७,२; -स्राम् तैआ ३, १९,१: -स्रेण श ६,४,१,२[2]; -स्रेषु जैमि १, ३८.; -स्रौ श ११,६,२,२.

अ-जहित– ?अस्युजहितः द्र.

अ-जात,ता[c]– -तः श ११.१, ६, १; का १,२,१,६[k]; ३,१,१२.१;३; -तस्य शां ७,२; गो १,३,१९; -ताः श २,५,२,३; ४; २२;६, २,२.४; १०; का १. ५, १,३[*]; १९;६,२,१;२;५[2]; तै १, ६.२. ७; -तान् तआ २,५,२[2]; -ताय ऐ ५,३१.

अजात-शत्रु[c,l]– -त्रुः शांआ ६, १; ३-१८;१९[6]; श १४,५.१,१-१७; -त्रुम् शांआ ६, १; श १४, ५, १,१.

आजातशत्रव[m]– -वम् श ५,५. ५,१४; का ७,५,३.११.

अ-जात-पुत्र[n]– -त्रस्य शांआ ४, ८.

अ-जात-शोक[n]– -कः श १२,३,१,९.

अ-जानत्– -नत्सु श १,४,६,२: का २, ५,३,१;-नन् जैमि ३,१६९.

अ-जामि[c]– -मयः शां २८, ५; -मि शां ३, ६; श १. ६, ३, २७[2]; का २,६,१ १९[2];७, १,१, ४; जैमि १,१०६[2];३००[3]; २, ४२[2]; १८८; ३८६; तां १०, ४,७; ८; १८,६, २२; -मिः शां २८, ५; -मिम् शां २८, ६. [°मि- जामि°].

अजामि√कृ, अजामीक्रियन्ते जैमि २,१८८.

अ-जामिता– -तायै शां ३,६; १३,९; ३०,११; श १, ३, २,८; ९;४, ४,८; ८,१,२५; २,२, ३, २७; ४ २,२, ९; ३,१८; ३,५. ११; का १,५.१,८; २ ५ १,६; १३; ७,३.१५;४,४; जैमि १. २०१; २,३५८;३८६; ३.१४५; १८४; तां ७,२,५;८,८,१२;१६,५,२१,

अ-जामित्व– -त्वाय तै १,८, २, १; २,१,४,३; ३,३,४,६; ९,१,२.

अँ-जायमान– -नः तैआ ३, १३.१[o].

अ-जित– -तम् शां २४, १; जैमि १, १८२[p]; १८९; तां १६, ४,११; -ता काअभ ६२ : १.

अजितस्य-जिति[q]– -तिः आ २.१९, १०; जैआ २,५,८; -ती[r] आ १, १७०φ.

अजिन[c]– -नम् ऐ ७, १; १३: श ५, २,१ २१; २४[2s]; तैआ २, १,

*a*) तस. अन्तोदात्तः (पा ६, २, १६०)। उप.<√जि। *b*) सपा. अजय्यम्><अजर्यम् इति पाभे.। *c*) वैप१ द्र.। *d*) पाभे. वैप १ उत्तमम् मै १, ४, ३ टि. द्र.। *e*) पाभे. वैप१ अजिरम् खि ४, ११, ६ टि. द्र.। *f*) पाभे. वैप१ अजुरस्य टि. द्र.। *g*) पाभे. वैप१ अमृतेभिः ऋ १, १८९,३ टि. द्र.। *h*) पाठः? आज° (अस.) इति शोधः। *i*) पाभे. वैप१ सुवीराम् तै ५. ७, २, १ टि. द्र.। *j*) =सपा. आपश्रौ ६, २८, १२ बौश्रौ १४, १९ : ४०; माश्रौ १, ६, ३, ५ हिश्रौ ३, ८, १२ हिपि २२ : ५। शांश्रौ २, १७, ८ अरिष्टः इति पाभे.। *k*) सप्र. श २, २, १, १० न जायते इति पाभे.। *l*) =राज-विशेष-। *m*) अ त्येऽर्थे अण् प्र. तत्स्वरश्च। *n*) तस.>बस.। पूर. प्रकृतिस्वरः। *o*) °जाय° इति पाठः? यनि. शोधः (तु. पाभे. वैप१ 'अजायमानः मा ३१, १९ टि.)। *p*) तु. प्रकरणम्; वैतु. C. (जै ६७) आ-जित- इति। *q*) =साम-विशेष-। *r*) BI. राम. च °आजितो इति ?। *s*) पाभे. अजर्षभस्य श ५,२, १,२४ टि. द्र.।

१; काठवा ७७ : २; जैमि ३, २४८; -नानि श ११. ८,४,३; तां १७.१,१५; -ने तां १७,१ १४. [°न- २कृष्ण°,बस्त°,मृग°, शार्दूल°, शुष्क°].
अजिन-वासिन्[a]- -सिनः जैमि १, ३३७; -सी श ३, ९,१,१२.
अजिन-संधाय्[b]- -यम् तै ३,४,१३ १[c].
?अजिनमिम् अजिनात[d] जैमि १, २९०.
अजिर- √अज् द्र.
अजिराप्रमुं[e]- -भ्रवः तैआ १,१८,१; -भ्रुः तैआ १,९,१.
अ-जि(ह्वा>)ह्व[f,g]- -ह्वः तैआ १, ११, ५[h]; ७; जैमि १, १०३; -ह्वाः जैमि १,१०३,२६१[2].
अजीगर्त[i]- -र्तः ऐ ७, १६[2]; १७[4]; -र्तम् ऐ ७,१५.
आजीगर्त[j]- -र्तम् आ, जैआ १, ३०१.
आजीगर्ति[k]- -र्तिः ऐ ७,१७.
अ-जीज[l]- -?ज्ञात[l] मं २,१,९.
अ-जीजि[l]- -जिम् मं २,१,१०[m].

अजीजिपत √जि द्र.
अ-जीत[k]- -तः ऐ ८,११; -ताः तैआ ४,४२,५[n]; -तान् तैआ १, १, ३;२१,२.
अजीत-पुनर्वण्य[o]- -ण्यम् ऐ ७, २२.
अ-जीर्ण[p]- -र्णाः जैमि १,३०५.
?अजीर्णनिद्राणि[q] ष ५,४,२.
अ-जुष्ट[r]- -ष्टम् तै २,४,३,१३; -ष्टाः जैमि १,५१[s];९६.
अ-जुह्वत्[r]- -ह्वत श ३, २, २, १२; -ह्वतः ऐ ३,३६;७,२; शां २,८; जैमि १,४३[4]; ४४.
अ-जुह्व(त् >)ती[r]- -तीः तै १,४,९, १.
अ-जू (र्य→)र्या[k]- -र्याम् तै ३, १, २,६.
अ-जेय- -याः जैमि १, २६५[t].
?अजेषु[u] जैमि १,१२.
अ-ज्ञ[v]- -ज्ञम् शांआ १४,१.
अज्ञत √जन् द्र.
अ-ज्ञात,ता- -तः जैमि ३, १५९; -ता जैमि २,३८४; -ताः जैमि २,३९१; तां ४,७,५.

अ-ज्ञान- -नात् तां ५, ७,११.
अज्ञान-तस् (:) कापा ९७ : ७[w].
अज्ञि √जन् द्र.
अज्मन्- √अज् द्र.
अ-(ज्या>)ज्य[f]- -ज्यम् तैआ १, ५,२.
अज्यमान- √अञ्ज् द्र.
अ-ज्यानि[k]- -निम् मं २, १, १०[x]; -न्यै ऐ ८,१०.
*अ-ज्या (ज्या-आ)मय[y]->अज्यामयिन्[z]- -यी तैआ १,२७,४.
अ-ज्यायस्[r]- -यः तै ३, ७,५,६.
अ-ज्येय[a1]- -यः जैमि २,१९६.
अज्येय-ता[b1]- -तया श ११.५,७,१.
अ-ज्योतिष्क[c1]- -ष्कः गो १,३,१०.
अज्र- √अज् द्र.
अ-ज्वर[c1]- -राः जैमि ३, २४.
√अञ्च्, अञ्चन-, अञ्चयित्वा, अञ्चिन्- √अच् ञ्च् द्र.
√अञ्ज्(बधा.)[k], अनक्ति श १, ८, ३,१३;२३; ९,२,१६; १९; का २,८,१,१२;२२;३,१३; अनक्ति श १,८,३. १४; २, ५,३,११; ३,७,१, १०; ११; १३[3]; ८,२

*a*) विप. । उस. उप. √वस् (आच्छादने)+णिनिः प्र. तत्स्वरश्च । *b*) =अजिन-संव- (वैप१ द्र.) । उस. उप. कर्तरि अणि युग्-आगमः (पा ७,३, ३३) प्रकृतिस्वरश्च । *c*) पाभे. वैप१ अजिनसंवम् टि. द्र. । *d*) पाठः ? अपि न मे इदम् अज्ञातम् इति शोधः? । *e*) =अग्निमूर्ति-विशेष- । व्यु.? । *f*) विप. । बस. अन्तोदात्तः । *g*) अ° इति पाठः ? *h*) कालिसं. निर्विभक्तिकः आन. मैसू. च टाबन्तः पाठः ? यनि. शोधः (तु. उत्तरं स्थलम्) । *i*) वैप४ द्र. *j*) =साम-विशेष- । तेनदृष्टीयः अण् प्र. । *k*) वैप१ द्र. । *l*) पाभे. शोधश्च वैप१ अजीतान् टि. द्र. । *m*) पाभे. वैप१ अजीतिम् तै ५,७,२,३ टि. द्र. । *n*) पाभे. वैप१ अदीनाः टि. द्र.। *o*) =अप्राप्तस्य पुनः प्राप्तिसाधन- । षस. उप. <पुनर्+√वन् (संभक्तौ) । *p*) विप. (पशु-) । तस. । *q*) पाठः? अजीर्णम्, अतिनिद्रा इति सा. । *r*) तस. नञ्-स्वरः । *s*) सप्र. श १२,४,१,४ का १४, ७,१,४ अमेध्याः इति पाभे. । *t*) अजय्याः इति मूको. । सप्र. जैमि १, २६४ अन्नाद्याः इति पाभे. । *u*) पाठः ? अजैष्म इति शोधः विमृश्यः (तु. जै ५) । *v*) तस. । उप. <√ज्ञा । *w*) अज्ञानतः कृतम्>सपा. खिसा १८,१३ ?अज्ञानतो कृतम् (तु. कापा. संटि.) इति पाभे. । *x*) पाभे. वैप१ अज्यानिम् तै ५, ७, २, ३ टि. द्र. । *y*) तस. उप. द्वस. ज्या- [=ज्यानि-] । *z*) विप. मत्वर्थे इनिः प्र. तत्स्वरश्च (वैतु. भा. सा. अ-ज्या° इति स्वरतश्चिन्त्यम्) । *a*[1]) विप. । (ब्राह्मण-) । तस. । उप. <√ज्या । *b*[1]) भावे तल् प्र. (तु. पावा ५,१,११९) लित्-स्वरश्च । *c*[1]) विप. बस. ।

